शति कोऽपि स्यादनुसंवत्सरी मतः। अस्य हेत्यस्य हत्यौ च तथा कुरुकाती मतः। स्यात् पुष्करसदित्येव सूचपूर्वनड़ः स्मृतः। अभिगमोऽनुहोड़श्च प्राग्देशेनगरान्तदाः। नेन्द्रान्तर्घादिवकृणात्सर्वे चेद्देवता अपि। अथ प्रवाहणः णेत्रे णेयान्ताञ्च णणीत्यपि। अर्द्धादिपरिमाणञ्च भवेदाद्यजनद्द यदि। अनीश्वरोऽशुचिश्चैवाचेत्रज्ञाकुशलौ मतौ। सुभागादिरिति ख्यातोऽसंख्यस्तन्त्रेषु तान्त्रिकैः।" सुभगादीनि दान्युत्तरदानि येषां ते सुभगाया अपत्यं सौभागिनेयः। द्वयोर्द्वयोर्ञिः। एवं सौभाग्यं दौर्भाग्यं महासौभगाय दीयते उद्याचिदिषु छान्दसः। कुरुजङ्गले भवः कौरुजाङ्गलः कश्चित् जङ्गलधेनुवनजान्ताः सुभगादौ न पठ्यन्ते तन्मते कौरुजङ्गलः वैश्वधेनवः सौवर्णवनज इति। सुहृदो इदं भावः सौहार्द्यं सौहार्दम् इह मुख्यस्य ग्रहणात् आदिष्टस्य तु सौहृदमिति सुहृद इदं सौहार्दं शक्तुप्रधानः सिन्धुः मध्यदलोपात् शक्तसिन्धुः तत्र भवः शाक्तुसैन्धवः सिन्धुशब्दः कच्छादिषु पठ्यते तेन तदन्तविधेरपि णः वैश्वधेनवं समूहे आधेनवं सौवर्णवानजं वध्योगशब्दो विदादिस्तस्यान्तरापत्यं टः वाध्योग अनन्तरे वाध्योगिः। अगारवेणुनामा कश्चित् तस्यापत्यम् आगारवैणवः, एवं शातकौम्भं परस्त्रिया अपत्यं पारस्त्रैणेयः णेयस्य इनेयः इह लोके भव ऐहलौकिकः लोकोत्तरादिति णिकः सर्वलोके विदितः सार्वलौकिकः परलोके भवः पारलौकिकः प्रयोगे भवः प्रायोगिकः अध्यात्मादित्वात् णिकः असिहत्यायां भवः आसिहात्यः चतस्रो विद्याः चतुर्विद्याः चतुर्विद्या एव चातुर्विद्यं चातुर्वर्ण्यमित्यन्यः। परे तु विद्यास्थानेऽप्येवमाहुः कुरुपाञ्चाले भवः कौरुपाञ्चालः अधिदेवे अधिभूते भवम् आधिदैविकम् आधिभौतिकम् अध्यात्मादित्वात् णिकः। राजपुरुषस्य भावो ब्राह्मणादित्वात् ण्यः राजपौरुषं घेता किं राजपुरुषस्यापत्यं राजपुरुषायणिः सर्वपुरुषस्येदं सार्वपौरुषं सर्वभूमि निमित्तम् ईश्वरः संयोग उत्पातो विदितो वा सार्वभौमम्। अन्तरहतोऽपत्यम् आन्तरहातिः अनुशतिकस्येदम् आनुशतिकम् अनुसंवत्सरेण दीयते आनुसम्वत्सरिकम् अस्य हेतिः प्रयोजकमस्य आस्यहैतिकः गणपाठात् मध्यलुक्। अस्य हत्येति युक्तः आस्यहात्यः णः। अत्र परेकदेशिनः अस्यहेति अस्यहत्यौ शब्दौ न पठन्ति। अस्यहत्यशब्दोऽध्याये वर्त्तते। कुरुकतस्यापत्यं कौरुकात्यः गर्गादित्वात् ण्यः। पुष्करसदोऽपत्यं पौष्करसादिः बाह्वादित्वात् णिः। सूत्रं पूर्वं यस्य स सूत्रपूर्वः स चासौ नड़श्चेति तस्यापत्यं सौत्रनाड़िः। अभिगमम्हर्त्ति आभिगामिको गुणः। अनुहोतेन पठति आनुहोतिकः। नगररूपमिदं येषां ते प्राग्देशे वर्त्तमानाश्चेत् सुभगादयः। पुण्ड्रनगरे भवः पौण्ड्रनागरः सौत्रनागरः। प्राग्देश इति किं मद्रनगरे भवः

महानगरः इन्द्रोऽन्तो यस्य स इन्द्रान्तः घं आदिर्यस्य स घादिः घादिश्चासौ वरुणश्चेति घादिवरुणः इन्द्रान्तश्च घादिवरुणश्च तौ न विद्येते यासु ताः तच्छब्देन देवतोच्यते। तासाञ्चः द्वन्द्वः तत्र तस्मिन् तथाच देवतानां चे सति देवतावाचकशब्दाः सुभगादौ पठ्यन्ते तेनाग्निश्च मरुच्च तौ देवतेऽस्य आग्निमारुतं कर्म क्रियते यो देवता द्वन्द्वः सूक्तसम्बन्धी हविःसम्बन्धी वा तत्रैवायं विधिः इह तु न भवति स्कान्दविशाखः ब्राह्मप्रजापत्यः नेन्द्रान्तघादिवरुणा इति किं सौमेन्द्रम् ऐन्द्रावरुणं हविः इह तु स्यादेव ऐन्द्राग्नम् आग्निमारुतम्। अथानन्तरं प्रवाहणशब्दोऽत्रादिषु पठ्यते णेय एव तस्य ग्रहणं तेन प्रवाहणस्यापत्यं प्रावाहणेयः तस्यापत्यं युवा प्रावाहणेयिः एतदादि सर्वे सुपञ्चालादावपि पठ्यन्ते। तेन पूर्वदस्य विकल्पः प्रावाहणेयः प्राधाहणेयिः। आदिश्चासौ अच्चेति आद्यच् न अत् अनत् आद्यच् अनत् यस्य तत् परिमाणविशेषणं तथाचाकारात् भिन्नाद्यच् अर्द्धादिपरिमाणं सुभगादौ पठ्यते तेन अर्द्धद्रोणेन क्रीतम् आर्द्धद्रौणिकम् अर्द्धकौड़विकम् अनदिति किम् अर्द्धप्रस्थेन क्रीतम् आर्द्धप्रास्थिकम् अर्द्धप्रस्थिकम् इति कश्चित् सुपञ्चालादित्वात् अर्द्धद्रौणिकम् अर्द्धकौड़विकम्। एवम् आनैश्वर्य्यम् आशौचम् अशौचम् आचैतन्नम् अचैतन्नम् आकौशलम् अकौशलम् आनैपुण्यम् इत्यादि। असंख्यः सुभगादिः तन्त्रे तान्त्रिकैरुक्तः तेन उदकशुद्धस्यापत्यम् औदकशुद्धिरित्यादि। प्रसङ्गसङ्गत्या साहित्येन सुपञ्चालादिरिह निरूप्यते। सुसर्वार्द्धाज्जनपदा दद्यामद्रादिशश्च ते। प्राग्ग्रामनगरादिभ्योऽवयवाह्नवाचिनः। संवत्सरस्तु सङ्ख्यादिः संख्या संख्यादिरेव च। अशानपरिमाणञ्च संख्यादिश्चेदनामनि। अभिविष्यति संख्यादिवर्षं प्रोष्ठपदास्तुजे। अथ प्रवाहणः णेये णे यान्तषणीत्यपि। अर्द्धादिपरिमाणञ्च भवेदाद्यजनद्यदि। अनीश्वरो शुचिश्चैव चेतन्नाऽकुशलौ मतौ। अनिपुणश्च केप्यत्रा यथा तथा यथा पुरौ। सुपञ्चालादयश्चैते कथ्यन्ते कोविदोत्तमैः। सु सर्व अर्द्ध इत्येतेभ्यो जनपदाः सुपञ्चालादौ पठिताः तेन सुपाञ्चाले भवः सुपाञ्चालकः एवं सर्वपाञ्चालकः अर्द्धपाञ्चालकः अथानन्तरं ते जनपदा मद्रभिन्ना दिक्पूर्वाश्चेद्भवन्ति तदा सुपञ्चालादौ पठ्यन्ते यथा पूर्वपाञ्चालकः उत्तरपाञ्चालकः दक्षिणपाञ्चालकः अमद्रा इति किं पौर्वमद्रः आपरमद्रः दिग्वाचकेभ्यः प्राग्भिन्नवर्त्ति ग्रामनगरवाचकाः सुपञ्चालादौ यथा पूर्वा चासौ इषुकामशमी तत्र भवः पूर्वेषुकामशमः पूर्वकार्ष्णमृत्तिकः नगराणां तावत् पूर्वस्मिन् पाटलिपुत्रे भवः पूर्वपाटलिपुत्रकः पूर्वकान्यकुब्जकः नगराणां ग्रामग्रहणेनैव सिद्धे भेदेन यत् उभयोरुपादानं तत् सम्बन्धभेदप्रतिपत्त्यर्थं तथाच दिक्पूर्वसमुदायः पूर्वेषु

## ४२२। चुद्रागोधाभ्यो वैरारौ।

चुद्रागोधाभ्यः ५॥, वा-।१।, एरारौ १॥।

**नाटेरः नाटेयः, गौधेरः गौधारः गौधेयः। गार्ग्यः वात्स्यः जामदग्न्यः पाराशर्य्यः।**

---

कामशम्यादिर्ग्रामनामधेयं इह तु दिग्वाचकं विनैव पाटलिपुत्रादिशब्दो नगरमाह। पूर्वञ्च ग्रामवाचकसमुदायस्यादिक्पूर्वावयवादुत्तरस्य ञिः। इह तु दिग्वाचकान्नगरस्योत्तरदस्य ञिरिति। ऋतुशब्दस्य समभिव्याहारात् ऋत्ववयववाचिनः पूर्वदात् ऋतवः सुपञ्चालादौ पठ्यन्ते यथा पूर्वं वर्षाणां पूर्ववर्षास्तत्र भवः पूर्ववार्षिकः पूर्वहैमन्तं अवयवादिति किं पूर्वासु वर्षासु भवः पौर्ववार्षिकः। संख्यापूर्वसंवत्सरः सुपञ्चालादौ पठ्यते यथा द्वौ संवत्सरौ व्याप्याधीष्टो भूतो भावी वा द्विसांवत्सरिकः एवं संख्यापूर्वसंख्यापि सुपञ्चालादौ यथा द्वे षष्टी व्याप्याधीष्टो भूतो भावी वा द्विषाष्टिकः द्विसाप्ततिकः द्विषष्ट्यादिशब्दाः संख्यासु वर्त्तमानाः कालाधिकारीयत्यमुत्पादयन्ति। संख्यादिशानवर्जितं परिमाणमसंज्ञायां सुपञ्चालादौ पठ्यते। यथा द्वौ कुड़वौ मानमस्य द्विकौड़विकः द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। अनामनि इति किं पाञ्चलौहितिकः पाञ्चकपालिकः। भविष्यति तु त्रीणि वर्षाणि व्याप्य भावी त्रैवार्षिकः तथाच नचत्रं ताभिर्युक्तकाल इत्यर्थे णः तस्याऽर्थशेषे लुप् प्रौष्ठपदा तत्र जातः इत्यर्थे ऋतुनचत्रात् णः प्रौष्ठपादः ज इति किं प्रौष्ठपदासु भवः कुशलो वा इत्यर्थे णः प्रौष्ठपदः प्रौष्ठपदा। इति निर्द्देशात् तत् पर्य्यायभाद्रपदाशब्दस्यापि ग्रहणं तेन भाद्रपादः अजे तु भाद्रपद इति। अथ प्रवाहणं णेय इत्यादि प्रयोगाः प्रदर्शिताः। कोऽपीत्यादि आङ्करिति शेषः तेन अयाथातथ्यं अयाथापूर्व्यं परमते अयथातथ्यं अयथापूर्व्यमिति॥ ४२१॥

चुद्राश्च गोधाश्च चुद्रागोधाः ताभ्यः एरश्च आरश्च एरारौ। चुद्राः शीलकुलहीना अङ्गहीनाश्च। गोधा गोधादिः अत्र वाशब्दस्य व्यवस्थावाचित्वात् चुद्राभ्यः परस्य णेयस्य एरः स्याद्वा। गोधादेः परस्य णेयस्य एरारौ स्यातां वा इत्यर्थः। शीलहीना यथा नव्या अपत्यं नाटेरः नाटेयः एवं कूलटाया अपत्यं कौलटेरः कौलटेयः पूर्वादिनेये कौलटिनेयः एवं दास्या अपत्यं दासेरः दासेयः। अङ्गहीना यथा। काणाया अपत्यं काणेरः काणेयः गोधाया अपत्यं गौधेरः गौधेयः गौधारः।

चटकाया अपत्यं चाटकेरः अत्र यघोर्लोपः इत्यत्र यघोरिति ज्ञापकादाकारलोपा-
भावः वाशब्दव्यवस्थयास्य नित्यत्वम्। एवं स्त्र्यपत्ये णेयस्य लुकि चटका इत्येव
निपात्यते। गर्गादिभ्यश्च। गर्गस्यापत्यं गार्ग्यः इत्यादौ यघोरित्यनेन अकारादे-
र्लोपः। स्त्र्यपत्ये गार्गी सूर्य्यागस्त्यस्येति यकारलोपः एवं वात्स्य इत्यादि॥ ४२२॥

श्रीरा-टी—क्षुद्राश्च गोधाश्च ताभ्यः त्वनिर्द्देशेनार्थ एयवाविधानसामर्थ्यात्
नट्या अपत्यं इति वाक्यं पक्षे नाटेयः एवं यदा कुलटाशब्दोऽसतीवाचकस्तदा
कौलटेरः कौलटेयः शीलहीनत्वात्। अङ्गहीनायास्तु काणाया अपत्यं काणेरः
काणेयः एवं कौञ्जेर इत्यादि। गोधार इति गोधाया अपत्यम् इति वाक्यं क्षुद्रा-
दिपाठात् गौधेरः अत्रादौ पृथक् पाठात् गोधेय इति जुष्टस्यापत्यं जौष्टारः मण्ड्या
अपत्यं माण्डारः षण्डस्यापत्यं षाण्डारः काक्या अपत्यं काकारः मूषिकाया अपत्यं
मौषिकारः बाह्वादित्वात् मौषिकिः। चटकाभ्यो मैरो लुक् तु स्त्रियाम्। चटकाच्च
चटकायाश्च परस्य णेरस्य ऐरः स्यात्। स्त्र्यपत्ये ऐरस्य लुक्। अतएव चटकात्
णेयः चटकस्य चटकाया अपत्यं चाटकेरः स्त्रियान्तु चटकस्य चटकाया अपत्यं
स्त्री चटका। गार्ग्य इत्यादि। ननु गर्गादिनडादिभ्यां गोत्र एव ण्यणायनौ तत्
कथमपत्यसामान्ये विहित इति चेत् सत्यं जामदग्न्यः पाराशर्य्यः इत्युभाभ्याम् अन-
न्तरे ण्यस्य द्रौणायन इत्यत्र णायनस्य दर्शनात् सामान्येनोक्तं अन्यत्रान्तरे ण्यस्य
द्रौणायन इत्यत्र णायनस्य दर्शनात् सामान्येनोक्तम् अन्यत्रान्तर एवेति भावः।
गर्गस्य गोत्रापत्यं गार्ग्यः अनन्तरे तु अतः णिः गार्गिरित्यादि। गर्गादिर्यथा। गर्गो-
वत्सात्क्रतीरेभ्यो व्याघ्रपादवटः शटः। अजो विलस्यग्निवेशौ जवमानो धनञ्जयः।
हचो विश्वावसुः शङ्खो वर्म्मधूमपुलस्तयः। संस्कृतिर्वेदभृद्व्यागेन्द्रङ्गराजस्वसैमधुः।
विभ्रेथ लोहितो मण्डुर्जिगीषुर्गुहसुर्नतुः। कपि बोधवतण्डास्त्वाङ्गिरसेऽप्यथ
कौशिके। कद्रु शंसिलसूलिन्द्र मनायी मनुकच्छपाः। मङ्सुः शम्बुः कतेस्तण्ड-
सक्ची रूच मङ्चु च। तनुः कुरुकतश्चैव शकलेभनरं तथा। कण्वागस्तिविरो-
हितौ वृषवहः पूर्वोगणः शिप्पलुः कण्वो भिण्डिलशण्डिलौ च चिकितोदभस्तितिच्चा-
भिषक्। गोकचारिव काचुलूकमुयनौ स्थूलासुनाभ्यूलुकम्। ताता मन्तितभिण्ड-
लोऽस्सरय गोलुन्दं तथा कुण्डली। अनडुद्व्यज्ञवल्क्यौ च पर्णवल्कः पराशरः।
जतुकर्णः शर्कराचः पूतिमाषश्च पिण्डलः। सूद्यानौ बृहदग्निश्च कुटीभृज्जमदग्नि
च। लोहितादिश्च कर्णादिर्गर्गादौ परिकीर्त्तिताः। गर्गस्याऽन्तरापत्यम् इति वाक्यं
णेयघोर्लोप इति अकारलोपे णिः स्त्रियां षित्त्वादीप् गार्गी वानायनपक्षे गार्ग्या-

## ४२३ । ओदौतोऽज्वत्तक्षद्य-क्यङ्गाः ।

ओत् औत: ५।, अच्वत् ।१।, तक्षद्य:-क्य-ङ्गा: १॥ ।

**ओदौद्भ्यां परस्तसंज्ञ:क्षत्संज्ञकश्च य: क्यङ्गौ च अज्वत् स्यात् । बाभ्रव्य: । नाड़ायन: गार्ग्यायण: दाक्षायणी । पितृष्वस्रीय: । मातृष्वस्रीय: । रैवतिक: । आश्वपालिक: । यादव: आङ्गिरस: ।**

---

यणी एवं सर्वत्रोहनीयम् । इह पुलस्तिशब्दपाठात् ष्ण्ये पुलस्त्य: पुलस्त्यशब्दस्य तु ष्ण्ये पौलस्त्या इति । यद्यपि वेदभृच्छब्दात्‌ष्णिषये क्षते पश्चात् स्वार्थे ष्ण्ये वैदभृत्य इति सिद्ध्यति तथापि ष्ण्ये लुकि वेदभृत इति सिद्ध्यर्थ: पाठ: तच्च तु वैदभृत्या इति राजशब्दोऽसौ गर्गादि: तेन राजस्यापत्यं राज्य:सै तु सौराजि: एतेनान्येषां सेऽपि सौगार्ग्य इत्यादि । माधव्यो विप्र: अन्यत्र माधव: शकलान्ताल्लौहितादे: ष्णस्य स्त्रियां नायन्नित्यं तेन लौहितायनीत्यादि । कपेरन्तरापत्यं काप्य: स्त्रियां काप्यायनी एवं बोध्य: बौध्यायनी वातण्ड्य: वातण्ड्यायनी । अनाङ्गिरसी तु कापेय: बौधि: वातण्ड: शिवादित्वात् ष्ण: अनाङ्गिरसेऽपि गार्गादित्वाच्च वातण्ड्य: स्त्रियां वातण्ड्यायनी वातण्डीति कश्चित् ॥ ४२२ ॥

अच् इव अज्वत् अच्तुल्या: । तश्च क्षश्च तौ तक्षौ च तौ यौ चेति तक्षद्यौ तक्षद्यौ च कश्च ङश्च ते । बभ्रोरपत्यं बाभ्रव्य: इत्यत्र ष्ण्ये क्षते ष्णोर्लोपौताविति उकारस्यौकारे अनेन यकारस्याच्तुल्यत्वे औकारस्यावादेश: । एवं नावा तार्य्यं नाव्यम् अत्र ढघेकादिति षे क्षते अनेन यकारस्याच्तुल्यत्वे औकारस्य आव् । एवं लूयते य: स लव्य: तव्यानीयया इति यप्रत्यये उकारस्य गुणे यकारस्य अच्तुल्यत्वात् ओकारस्य अव् । एवञ्च भाव्यमित्यत्र घ्यणि क्षते वृद्धौ यकारस्याच्तुल्यत्वे औकारस्य आव् ओकारस्य अव् ये । एवञ्च गामिच्छति गव्यति नावमिच्छति नाव्यति इत्युभयत्र क्यौम्याद्यर्थेति क्ये क्षते यस्याच्तुल्यत्वादवावौ । एवञ्च गौरिवाचरति गव्यते नौरिवाचरति नाव्यते इत्युभयत्र घान्ङ्क्षीति ङ्ये तस्याच्तुल्यत्वादवावौ । नचात्र श्वयां वौरित्यनेन पञ्चे वकारलोपोऽस्त्विति वाच्यं न लोप: क्यङे इत्यनेन क्यङयोर्वकारलोपादन्यस्य विरामविहितकार्य्यस्य निषेधेन दान्तलाभावात् अतएव वाचमिच्छति वाच्यति इत्यादौ न कुङादि: । ननु व्यय इत्युक्तौ

प्रत्ययकारेणैवेष्टसिद्धौ तद्वयकथ्या इति गौरवं कथम् इति चेन्न। उङ्शब्दे इत्यस्य प्रपूर्वस्य प्रीयते। केवलस्य च्वां भूयोऽमि श्रीयत इत्यादौ यकोऽपि अज्वत्वा-पत्तेः। गार्गादिस्तु गर्ग वत्स आकृति संकृति अज व्याघ्रपद वैदभृत् वीणायाग पुलस्ति विलस्ति रैभ अग्निवेश शङ्ख शट अवट धूम वर्म्मिन् धनञ्जय दृच विश्वावसु जवमान लोहित संशित बभ्रु मण्डु मङ्क्षु मङ्कु मन्तु वीध शम्बू गितु गुग्गुलु जिगीषु मन्यु तन्तु इन्द्र मनायी मानवी मनु कात्यक रूच तनुच तरुच तण्ड वतण्ड कपितक कुरुकत सकाल देवज्ञ कण्व गोकच अगस्ति कुण्डली अनडुह् यज्ञवल्क पर्णवल्क जात विवोहित वृष गणनावह गण शण्डिल मुद्गल मुषल पराशर जतूकर्ण मन्वित अश्वरथ शर्कराच पुतिमास स्थूला अवरका पिङ्गल कृष्ण गोलुन्द उलुक तितिच भिषज् चिणुज भण्डिल दन्त किकात एकलू पिप्पलु वृहदग्नि जमदग्नि सुलोभिन् कुटीषु पाणु इत्यादि। ८७। नड़ादिमाह। नड़स्यापत्यं नाड़ायनः ष्णग्णि एतदुभयप्रत्ययान्तेऽपि नड़ादिः स्यादित्यत आह गार्गायणः दाचायणीति गर्गस्यापत्यं गार्ग्यः गार्ग्यस्यापत्यं गार्ग्यायणः अत्र क्यञ्चौ चेत्यत्र आकारवर्जनात् णस्य लोपो न स्यात्। एवं दक्षस्यापत्यं दाक्षिः दाक्षेः स्त्र्यपत्यं दाक्षायणी अत्र ययोर्लोपि इति इकारलोपः षित्त्वादीप्। नड़ादिस्तु। नड़ अश्व अश्मन् शङ्ख विद पुट रोहिण खर्ज्जूर स्वरूप भड़िल भड़ित भण्डिल भण्डित प्रकृति वासदत्त अनुग्रीवा काश काण कौशल गोलाच अर्कश्वन् वलसद चक्र कुल श्रविष्ठा पविचिन् गोमिन् श्याम धूम धूम्र वाग्मिन् विश्वानर कूट जल वड़ ग्रीष्म अर्ह हृच्च विशष्य विशाल गिरि चपल चुप दासक वैगख वाप्य अनुड्ह्य अर्जुन शूद्रक सुमनस् ओजस् हंस आतप किर खिर खदिर चरमुञ्ज इतिक इतिस उदक नमक सप्तन् राजन्यतिक प्राण नव सायक दास मित्र द्वीप पिञ्जर पिङ्गल किङ्कर कातर काखल काश्य काव्य अज अमुष्य अमित लिप्त चित्र कुमार लोह मूर्द्ध स्तम्भ शिंशपा अग्र श्रण शकट तृण शलभ मिमत ऋच् जल इन्ध जलन्धर युगन्धर हंसक दण्डिन् हस्तिन् पञ्चाल चमसन सुकृत्य स्थिरक ब्राह्मण चरक बदर अश्मल खरूप कासुक ब्रह्मदण्ड उडुम्बर श्रोण आलोह मण्डप इत्यादि। कुञ्जादिस्तिकादिश्च नड़ाद्यन्तर्गणौ॥ ११६॥ पितृष्वसादिमाह। पितृष्वसुरपत्यं पैतृष्वस्रीयः एवं मातृष्वस्रीयः स्त्रियां पैतृष्वस्रीया षित्त्वाभावादेव। पितृ-ष्वसादिस्तु। पितृष्वसा मातृष्वसा भ्राता चतुष्टयमिति। रैवत्यादिमाह। रैवत्या अपत्यं रैवतिकः एवम् आश्वपालिकः। रैवत्यादिस्तु। रैवती अश्वपाल द्वारपाल मणिपाल

२ वृक वृष्णिक वृकग्राह कर्णग्राह कुक्कुटाच ॥ ९ ॥ शेषमाह । यदोरपत्यं यादवः अत्र न्वौर्लौपौतावित्ति उकारस्य ओकारेऽव् अङ्गिरसोऽपत्यं आङ्गिरसः एवं रघोः राघवः उपगोः औपगवः पर्शोः पार्शवः इत्यादि । न्वौर्लौपौतावित्यनेन प्राप्तं नलोपं निषेधयति ॥ २३ ॥

श्रीरा-टी—औश्च औश्च तत्तस्मात् अजिन अज्वत् तश्च लश्च तौ तलतौ तलतोर्यः तलादयः तलादयश्च कश्च ञश्च ते । बाभ्रव्यः इति बभ्रोरनन्तरापत्यं ण्यः न्वौर्लौपौतावित्ति उवर्णस्यौकारः यस्याज्वद्भावात् यलायवायाव इत्यवादेशः कौशिक एवाभिधानम् अन्यत्र बाभ्रवः तनुस्थाने तन्तुरिति पठत्यपरः । कती मुनिविशेषः तस्यानन्तरापत्यं कात्यः स्त्रियां कात्यायनी । कण्वादेः प्रयोजनमग्रे वक्ष्यति । गर्गादेराकृतिगणत्वात् रामरथशब्दः कण्वादौ ज्ञातव्यः रामरथस्यापत्यं रामरथ्यः द्वे तु रामरथाः स्त्रियां रामरथ्यायनी रामरथी रामरथ्यस्यापत्यं युवा रामरथ्यायनः रामरथस्य छात्रा रामरथाः सङ्घाङ्कघोषलक्षणानि रामरथानि रामरथशब्दादगोत्रेऽप्युपचारात् । कुर्वादेरषिङ्गीराजश्वशुरात्त्वनिन्मनोऽस्तु संश्च । कुर्वादेर्गोत्रेऽगोत्रे च ण्योऽषित् स्यात् ण्य इत्यर्थः गीराजश्वशुरेभ्यस्तु अनित् इत्शून्यो य इत्यर्थः । मनोऽस्तु ययोगे संश्च न इत् । कुरोरपत्यं कौरव्यः कौरव्यौ कौरव्या इत्यादि स्त्रियां कौरव्यायणी कौरव्या, केचित् कौरव्यायणीति नित्यमाहुः । एवं लाक्षण्यः लाक्षायणौ लाक्षायणाः स्त्रियां लाक्षाण्या इत्यादि । कुर्वादिर्यथा । कुरु करि गर्ग गणिकाकूट शकल शलाका सत्यङ्कारम् । शाकं शुभ्रीमतिमङ्कुष तक्षा लक्षणवङ्भीकारम् । एर्वकार कैशोरि रथकारकश्च पट्टिकाः । पिण्डीमूलेन्द्रजाली रात्रीशकम्भुकविधारकः । एकजित् स्यात् न मन्थायश्च पितृमत् पथिकारिणौ । हन्ता भर्त्ता शूर्पनायी दामीश्चिषि विनस्तथा । भर्तुः श्यावरथः श्यावपुत्रः सेनान्तदा मताः । क्षत्त्रियं सम्राट् केशिन्याः केशिनी भवेत् । न्येभ्रातुर्व मं तस्यैव वेनः वेनचिदीरितः । यमादित्यावदितिस्त्रैवा पश्वाद्यादिपतिर्दितिः । पश्वश्वकुलराष्ट्रार्थंगणवास्तु धनं वसु । विद्याशतमवचेतं प्राणधान्य सभाजगत् । रथकारशब्दोऽत्र जातिवचनः । शिल्पिवचनस्तु कारुत्वेन एव प्राप्तेः । शकौ भवतीति शकं भूरिह पाठबलाच्छकारागमः । हारिषेण्य वैष्वक्सेन्यः बाह्वादित्वात् हारिषेणिः वैष्वक्सेनिः एवं तान्त्रवाप्यः तान्त्रवायिरित्यादि । सम्राजोऽपत्यं साम्राज्यः क्षत्त्रियः अन्यत्र बाह्वादेराकृतिगणत्वात् साम्राजिः केशिन्या अपत्यं कैशिन्यः ण्ये केशिनादेशः अन्यथा पुंवद्भावे कैश्यः स्यात् । भ्रातुरपत्यं भ्रातृव्यः व्यस्य वम् पितृव्यत्वादित्वात् भ्रात्रीयः कस्यचिन्मते वेणशब्दस्य

कुर्वादित्वात्, वैण्यः तथा च वैण्यं पृथुं हैहयमर्जुनञ्च इति। वेणाच्छान्दसीति पाणिनिसूत्राच्छान्दसमिदम्। यमस्यापत्यं याम्यः आदित्यस्यापत्यम् आदित्यं ण्ये ण्यलोपः अदितेरपत्यम् आदित्यः प्राजापत्यः एवं वैश्वपत्यः दितेरपत्यं दैत्यः पश्वा-द्यादिपतेस्तु पाशुपतः जागत्पतम् इति कुर्वादि। गोरपत्यं गव्यः राज्ञोऽपत्यं राजन्यः क्षत्रियेऽभिधानम् अन्यत्र राजनः मनवजत्यादिना नियमेन न नलोपः हनषण इति नियमान्न उङ्लोपः श्वशुरस्यापत्यं श्वशुर्यः संज्ञायां बाह्वादित्वात् श्वाशुरिः मनोरपत्यं मनुष्यः ये सन् न इत्। नाड़ायन इति नड़स्यान्तरापत्यम् इति वाक्यम्। नड़ादि-र्यथा। नड़ भण्डित रोहिण शङ्खपुटं पद काण चरं गिरि चक्र कुटम्। विद काश वनं कुल धूम जलं किर चित्र सुरं खड़लोह नरम्। भड़िलो भड़लो भड़ितः प्रक्रतेश्चपलो ममकः खदिरो मिमतः। चरकः शकटः सुलभो वदरः स्थिरकः खरपः सुमनोऽञ्जनाः। शायक दासक किङ्कर दुर्गं कातर काखल पिङ्गल धूम्रम्। भण्डित कोशल सुपक्व विशालं सातप चुपमश्वविशष्पम्। भूजः खरूपः खञ्जालः वामो दर्भो धरिच्चिणः। अश्मा गोलो च गोलाच्च जलन्धर युगन्धराः। कुमारः शिंशपा काव्यो वोचार्कावित सेतिको आनडुह्यार्जुनो दण्डोश्यामो वाग्मी च सप्तमः। इन्द्रा-सुर्यो लिगुः काश्यो राजव्यातीकपिञ्जराः। दीपः प्राणो दास मिलो मुञ्जाप दण क्षुद्रकाः। अनुग्रीवः श्रविष्ठा च विश्वानरस्य हंसकः। मण्डपा काश्मलस्तम्ब खर्जूर चमसश्च चटत्। वीक्षो हस्ती वैणवाप्यो सुक्तः शीणकासुको। ब्राह्मणोडुम्बरा-नीह द्रोणजीवन्त पर्वताः। स्तम्भोऽश्वत्थोप्रदण्डः स्यात् शलङ्कुस्तु ह्यकौशिके। वाशिष्ठे तु वर्णविप्रे लक्षणजातस्तु पूरुषे। दर्भं आग्रायणे भर्गस्त्वै गर्त्तैं शुनकस्तथा। वत्स्ये कृषावग्निशर्मा स्याच्छरद्वांस्तु भार्गवे। भारद्वाजे तु आत्रेयो भरद्वाजः शपस्तथा। आत्रेयेऽथ ष्णायणे च क्रौष्टोकस्तुक् सदा मतः। ष्णान्ता ष्णान्ताश्च गोत्रार्थाः ष्णान्ताश्च हरितादयः। शिंशपाया अपत्यमित्यर्थे। आद्यचो णित्ते शिंशपादाश्रयो दीर्घसत्त्व-दैविकानाम्। शिंशपादीनां णित्ते परे आद्यचः स्थाने विप्रसङ्गे आत् स्यात् शांशपा-यनः आनडुह्य इति गर्गादि ष्णान्तः अर्जुनस्यान्तरापत्यम् आर्जुनायनः बाह्वादित्वा-दार्जुनिः। एवं साक्षायनः साक्षिः पञ्चानामपत्यं पाञ्चायनः बाह्वादित्वात् पाञ्चिः। वैण्य इति वेणो नाम राजर्षिस्तस्यापत्यं वृद्धेऽकोशलाजादेरिति ण्यङ् वैण्यस्तस्या-पत्यं युवा वैण्यायनः अतएव ण्यट्न क्षत्रियार्षेभ्य इति न लुक्। द्रौणा-यणोऽश्वत्थामा इति तु पुत्रे पौत्रत्वोपचारात्। शलङ्कोरन्तरापत्यं शालङ्कायणः ष्णायने उतो लोपः। इदमकौशिके कौशिके तु बाह्वादिः वानायनो वाशिष्ठ:

अन्यत्र वार्नि: कार्ष्णायनी विप्र: अन्यत्र कार्ष्णि: जातस्यान्तरापत्यं जातायन: पुमान् पुरुष इति किं जाताया अन्तरापत्यं जातेयि: प्रातिपदिक ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्यस्य ज्ञापकमिदम्। दार्भायण: आग्रायण: अन्यत्र दार्भि: भार्गायण: त्रैगर्त्ते अन्यत्र भार्गि: शौनकायनी वात्स: अन्यत्र शौनक: विदादित्वात् ट्ञ: आग्निशर्मायण: ऋषि: अन्यत्र बाह्वादित्वात् आग्निशर्मि: शारद्वतायनी भार्गव: अन्यत्र शारद्वत: विदादित्वात् ट्ञ: आत्रेयायणी भरद्वाज: अन्यत्रात्रेयि: भारद्वाजायन: शापायनश्चात्रेय: अन्यत्र भारद्वाज: ऋषिणः शापि: अत: णि: क्रौष्टोरपत्यं क्रौष्टायन: उती लुक् णायने इदमकौशिक इति कश्चित्। गोत्रविहितणान्ताऽगोत्रविहितणान्ताश्च नड़ादौ पठ्यन्ते तस्मादेव नियमात् यूनि प्रत्यय:। मूले गार्ग्यायण: इति गर्गस्यान्तरापत्यं गार्ग्य: तस्यापत्यं युवा इत्यर्थे णायन: आति न णस्य लोप: एवं वात्स्यायन: इत्यादि। मूले दाक्षायण इति दक्षस्यान्तरापत्यम् इति दाक्षिस्तस्यापत्यं युवा दाक्षायण: एवं प्लाक्षायण इत्यादि स्त्रियां गर्गस्यापत्यं यूनी गार्गी गार्ग्यायणी दाक्षीति स्त्रियां युवत्यनिषेधात् दाक्षायणी तु दक्षस्यापत्यं दाक्षायण: स्त्रियां षित्वादीप्। गोत्रार्थ इति किं सोमो देवता अस्य सौम्यस्तस्यापत्यं सौमि:। सुतङ्गमस्य निवास: सौतङ्गमिस्तस्यापत्यं सौतङ्गम: शेष ण: एवं ट्ञान्ता हरितादय: हरितस्यान्तरापत्यं हारित: विदाद्यन्तर्गणत्वात् गोत्रे ट्ञ: तस्यापत्यं युवा हारितायन: परस्त्रिया अपत्यं पारशरस्तस्यापत्यं युवा पाराशरायण: इत्यादि। बाह्वादे: णायनस्य लुक्। बाह्वादे: परस्य णायनस्य यूनि विहितस्य लुक् स्यात्। बाहस्यान्तरापत्यं बाहि: तस्यापत्यं युवा बाहि:। एवमुदीचोऽपत्यम् औदञ्चिस्तस्यापत्यं युवा औदञ्चिरित्यादि। बाह्वादिर्यथा। बाहिरौदञ्चि भौलिङ्गि सात्यकामि च सात्यकि:। औदव्रत्यौद मद्यौद शुङ्गि शालङ्कयस्तथा। गौपासञ्चौदमयी च दैवस्थान्यौद्गायनी। स्वाफल्की दक्षिती वाह चितिश्चैवौज्जिहायनि:। पैङ्गलायनि वाल्कायनि पैङ्गायनि वारयवाणि:। णान्तानामेषां प्राचां णे श्चावैङ्क्यादेरित्यनेन लुकि सिद्धे प्राच्यार्थं पृथगुपादानम्। प्राचां णेश्चाह वैङ्क्यादे: वैङ्क्याद्यै:। प्राचां गोत्रे य: णिस्तदन्तात् यूनि विहितस्य णायनस्य लुक् स्यात् न तु वैङ्क्यादे:। पन्नागावस्यापत्यं पन्नागाविस्तस्यापत्यं युवा पान्नागावि:। वैङ्क्यादेस्तु विङ्कस्यान्तरापत्यं वैङ्कि: तस्यापत्यं युवा वैङ्क्यायन:। धारणस्यान्तरापत्यं धारणि: तस्यापत्यं युवा धारणायन: इत्यादि। वैङ्कि धारणि वाल्मीकि दैवप्राणाईतिस्तथा। तौल्वस्या सुविदैवोहि पौञ्चिवैरकिवैकनि:। कारेणुपादि वैकर्णी कालिङ्गा हंसकौ तथा। चापिटक्यासिवास्थी पौष्करसादिश्च नैयसि:। दैवमत्यन्ति

बह्वी तथा दैवयज्ञिर्मतः । न भरतगोत्राच्च । प्राच्यात् भरतगोत्राच्च यूनि विहितस्य लुक् स्यात् । अर्जुनस्यान्तरापत्यम् आर्जुनिस्तस्यापत्यं युवा आर्जुनायनः पूर्वस्य बोधकोऽयम् । पैतृष्वस्रीय इत्यादि पितृष्वसुरपत्यमिति वाक्यं णीयः णित्त्वाद वृिः स्त्रियां पैतृष्वस्रीया पैतृष्वस्रीया भार्य्या इत्यादि पितृष्वसा तथा मातृष्वसा भ्रातृरनित् भवेत् । कुत्सायां णायणिश्चैव सौवीरगोत्रसम्भवः । भ्रातृशब्दात् णीयो णित् तेन भ्रात्रीयभार्य्यः इति सौवीरगोत्रसम्भवो णायनिः कुत्सायां पितृष्वस्रादौ पठ्यते तस्मादपि अणिणीयः । यमुन्दस्यापत्यं यामुन्दायनिः तस्यापत्यं युवा नित्यं यामुन्दायनीयो जाल्मः रेवत्यादित्वात् यामुन्दायनिकः एवं सौयामायनीयः सौयामायनिकः वार्ष्यायनीयः वार्ष्यायनिकः । तथाच यमुन्दश्च सुयामा च वार्ष्यस्तेभ्यः विज्ञः स्मृताः । सौवीरेषु च कुत्सायात् द्वौ योगौ शब्दवित् स्ववित् । इति महावृत्तिः द्वौ णीयणिकौ । णित्त्वाभावे पूर्ववत् प्रयोजनम् । रैवतिकः इति रेवत्या अपत्यम् इति वाक्यं ययोरित्यादिना ईकारलोपः त्रिश्च स्त्रियाम् । रैवतिकौ आश्वपालिक इति अश्वं पालयतीति अश्वपालः षण् तस्यापत्यमिति वाक्यम् । रेवत्याश्वमणिद्वारपूर्वपालोऽथ कुत्सने । गोत्रस्त्रियश्च बाहुल्याद वृद्धाः सौवीरगोत्रजाः । कर्णभ्रातृवृकग्राही कुक्कुटाख्यस्तथैव च । वृकवञ्ची सवर्णा च परे शिष्टप्रयोगतः । अश्वमणिद्वारेभ्यः पाली रेवत्यादौ पठ्यते जयादित्यस्तु अश्वपाली मणिपाली । द्वारपालीति स्त्रीलिङ्गमङ्गीकरोति न्यासे तु द्वारपालादीनामदन्तनिर्देशः । अथानन्तरं गोत्रविहितत्यान्ता स्त्रिलिङ्गाः कुत्सायां पठ्यन्ते गार्ग्या अपत्यं युवा गार्गिकः ग्लुचुकायनेरपत्यं युवा ग्लौचुकायनिको जाल्मः शिवतादित्वात् गार्ग्यः ग्लौचुकायनश्च जाल्मः । गोत्र इति किं कारिकेयो जाल्मः स्त्रियः इति किम् औपगविः कुत्सायामिति किं गार्गेयो मानवकः । कुत्सन इत्येव सौवीरगोत्रे ये वृद्धास्तेऽपि बाहुल्याद्रेवत्यादौ पठ्यन्ते भागवित्तस्यान्तरापत्यं भागवित्तिस्तस्यान्तरापत्यं युवा भागवित्तिको जाल्मः बाहुल्यात् पक्षे यथा प्राप्तं भागवित्तायनो जाल्मः । तृणविन्दोरन्तरापत्यं तार्णविन्दवः तस्यापत्यं युवा तार्णविन्दविकः । आकाशायस्यान्तरापत्यम् अवग्रादिराकृतिगणत्वात् आकाशायेयः तस्यापत्यं युवा आकाशायेयिकः अन्ये तु अचग्रादिपठितत्वात् आकाशायनशब्दस्यैव आकाशायनेयिको जाल्मः इति वदन्ति तन्न तथाचाहुः भागपूर्वपदो वित्तिर्द्वितीयस्तार्णविन्दवः । तृतीयस्त्वाकाशायेयो गोत्रात् ठग्वकुलं तत इति परे । ठक् णिकः । वृद्धिग्रहणमिह स्त्रीनिवृत्त्यर्थं सौवीरगोत्रज इति किम् औपगविर्जाल्मः कुत्सायामिति किं भागवित्तायनो मानवकः । शेषानुदाहरति यादव इति यदुर्नाम

## ४२४। मन्वर्जान् वर्म्मौच्चस्येनोऽनोऽध्वात्मनो-ऽपत्यणोऽविकारणाभावकर्म्मय ईने न नलोपः।

मन्वर्जान् वर्म्मौच्चस्येनः ६।, अनः ६।, अध्वात्मनः ६।, अपत्यणि ७।, अविकार-णाभाव-कर्म्मये ७।, ईने ७।, न ।१।, नलोपः १।।

**मन्वर्जस्यानो वर्म्मण उक्ष्णः स्यात् परस्येनश्चापत्यार्थ-णे अनो विकारार्थवर्जे णे भावकर्म्मार्थवर्जे ये च, अध्वात्मनो-रीने,नलोपो न स्यात्। याज्वनः भाद्रवर्म्मणः औक्ष्णः चाक्रिणः। श्रैवः वाशिष्ठः।**

---

कश्चित् तस्मात्तरापत्यम् इत्यर्थे णः आङ्गिरस इति अङ्गिरसोऽपत्यम् इति वाक्यं मुनौ तु शिवादित्वात् एवम् औपगवः माधवः मारीच इत्यादि॥ ४२३॥

मनं वर्जयतीति मन्वर्जं ढात् षण् मन्वर्जश्चासौ अन् चेति मन्वर्जान्। स्यः संयोगः स्यादिन् स्येन् मन्वर्जान् च उक्षन् च स्येन् च मन्वर्जान्वर्म्मौक्षस्येन् तस्य। अध्वन् च आत्मन् च अध्वात्मन् तस्य। अपत्ये णः अपत्यणः तस्मिन्। न विकारोऽविकारः अविकारे णः अविकारणः भावश्च कर्म्म च भावकर्म्मणी न भाव-कर्म्मणी अभावकर्म्मणी अभावकर्म्मणोर्यः अभावकर्म्मयः। अविकारणश्च अभाव-कर्म्मयश्चेति अविकारणाभावकर्म्मयं तस्मिन् विकारार्थवर्जणेषु सर्वेषामनन्तानां नलोपनिषेधे अपत्यणे मनन्तस्य नलोपार्थमाह मन्वर्जानिति। अपत्यणे परे मन्वर्जस्यैव अनन्तस्य नलोपो न स्यात्। मनन्तस्य तु नलोपः स्यादेव। अपत्या-र्थादन्यत्र मनन्तस्यापि नलोपो न स्यात्। मनन्तवर्जनात् वर्म्मणोऽपि नलोपे सिद्धे तस्य नलोपनिषेधार्थं पुनर्वर्म्मणो ग्रहणम्। उक्षास्तु इह ग्रहणं नियमार्थमेव तेन उक्ष्णोऽपत्यार्थणे एव नलोपो न स्यात् अन्यार्थणे तु नलोपः स्यादेवेति। यथा उक्ष्णोऽपत्यं औक्ष्णम्। अन्यत्र उक्ष इदम् औक्षं चर्म्म। यज्वनोऽपत्यं याज्वनः शिवत्वात् णे क्रते अनेन नलोपनिषेधः। मनन्तस्य तु सौपामः भाद्रपामः। हित-नाम्नस्तु नलोपो वा वक्तव्यः। हैतनाम्नः हैतनामः भद्रवर्म्मणोऽपत्यं भाद्रवर्म्मणः उक्ष्णोऽपत्यम् औक्ष्णः इत्यत्र हन् यन् घ्रत राज्ञामिति उङ्लोपः। चक्रिणोऽपत्यं चाक्रिणः एवं शाङ्गिनः दाण्डिन इत्यादि। अनन्त विकारार्थवर्जे णे यथा ब्रह्मणो

जातः ब्रह्म वेत्ति इत्यर्थे वा ढघेकादिति णः ब्राह्मणः। एवं साम्न इदं सामनं अत्र मनन्तस्यापि वर्जनं नास्ति। शुन इदं शौवनं माघवनं चर्म्मण इदं चार्म्मणम्। शुनः सङ्कोचे चर्म्मणः कोषे वाच्ये ब्रह्मण इदमित्यर्थे न ञा निर्दिष्टमनित्यमिति न्यायात् नलोपनिषेधो न स्यात्। शौवः सङ्कोचः। चार्म्मः कोषः। ब्रह्मणोऽयं ब्राह्मो मन्त्रः। विकारार्थणे तु हेम्नो विकारः हैमः अश्मनो विकारः आश्मः। अन्यत्र हैमनं आश्मनम्। भावकर्मार्थवर्ज्जे णः मूर्द्धनि भवो मूर्द्धन्यः सामनि साधुः सामान्यः ब्रह्मणि साधुः ब्रह्मण्यः। भावकर्मये तु राज्ञो भावः कर्म वा राज्यं एवं सौदाम्यम् अध्वात्मनोरीने यथा अध्वनि साधुः अध्वनीनः एवम् आत्मनीनः एवम् अध्वन्यः अत्र तु अनन्तत्वादभावकर्म्मये सामान्यान्नलोपनिषेधः। शिवस्यापत्यं शैवः एवं वाशिष्ठः। शिवादिस्तु। शिव तचन् गङ्गा विपाशा क्रुञ्चा कोकिला प्रोष्ठ वतण्ड पिष्ट मयूर कर्ण खर्जूरक भूरि सन्धि मुनि कुठार अनभिम्लान ककुत्स्थ सुपिष्ट ऋष्टिषेण यस्कभूमि इला सपत्नी जरत्कारु पैष्टिक चण्ड कुम्भ कहोड़। ककुभ बोध पीवर तृण कर्ण चीरह्रद जलह्रद परिषिक गोभिल जटिलक वधिरक सुञ्जरिक वृष्णिक खञ्जारक खञ्जाल रेख लेख वर्त्तुल पिषाक इक्ष्वाकु नड़ाक ऊर्णनाभ उत्क्षेपा रोहितिका आर्य्यश्वेता लच वशिष्ठ लच अयस्थूल किनन्दन विरूपाक्ष इत्यादि ॥ ६२ ॥ यस्कादिर्विदादिश्च शिवाद्यन्तर्गणौ ॥ ४२४ ॥

श्रीरा-टी—मनं वर्जयतीति मन्वर्जः स चासौ अन् चेति मन्वर्जान् स च वर्म्मा च उक्षा च श्वन् च (श्वादिन् श्वेन्) तत् मन्वर्जान् वर्म्मोक्षश्वेन् तस्य अध्वा च आत्मा च तत्तस्य न विकारोऽविकारस्तस्मिन् णः अविकारणः। भावश्च कर्म च ते भावकर्मणी न भाव कर्मणी अभावकर्मणी तयोर्यः अभावकर्मयः पश्चात् अविकारणाश्च अभावकर्मयश्च तत्तस्मिन्। याज्वन इति यज्वनोऽपत्यम् इत्यर्थे णः न्वोर्लोपौतौ तेऽच्ये इति प्राप्तलोपोऽनेन निषिध्यते मन्वर्ज इति किं भाद्रसामः सौसामः अपत्यण इति किं चर्म्मणा परिवृतो रथः चार्म्मणो रथः मन्वर्जानित्युक्ते वर्म्मणो वर्जने प्राप्ते वर्म्मग्रहणादाह भाद्रवर्म्मणः इति भद्रवर्म्मणोऽपत्यम् इति वाक्यं एवं शार्ववर्मणः इत्यादि औक्ष इत्यादि। यद्यपि मन्वर्जेत्यनेन नलोप प्रतिषेधादुक्षोऽपि प्रतिषेधः सिध्यति तथाप्युक्षः पृथग्ग्रहणं एवं ज्ञापयति अपत्यणातिरिक्ते णे नलोपनिषेधो न भवति तेन औक्षं पदमित्यत्रानो विकारणे निषेधो न स्यात् चाक्रिण इति चक्रिणोऽपत्यम् इति वाक्यं न्येनो न नलोपः। अस्य सूत्रस्य योगविभागः कर्त्तव्यः तेन क्वचिदन्यत्रापि तथाहि। ब्रह्मणो जातावप्रत्यर्थे।

ब्रह्मणोऽपत्यणे नलोपो न स्यात् जातौ। ब्रह्मणो अपत्यं ब्राह्मणो जातिः अपत्यण इति किं ब्राह्मी नामौषधिजातिः जातौ किं ब्रह्मणोऽपत्यं ब्राह्म इति। पणि गणि गाथि केशि विदथिनो वा तु हितनाम्नः। एषामपत्यणे नलोपो न स्यात् हितनाम्नस्तु वा। पाणिनोऽपत्यं पाणिनः गाथिनं कैशिनं वैदथिनः। हितनाम्नोऽपत्यं हैतनामः। इनोऽकलाप्यादेरनपत्ये। इनो नस्य लोपः स्यात् न तु कलाप्यादेः अनपत्यणे परे स्रग्विण इदं स्राग्विणः मैधाविनः अपत्ये तु मैधाव इत्यादि। कलाप्यादिस्तु कलापिन इदं कालापम् कलापी पीठसर्पीषु कुथुमी तैतिली तथा। जाजली लाङ्गली स्यात् स ब्रह्मचारिशिखण्डिनौ। कलाप्यादौ शिशाली च नवशब्दाः प्रकीर्त्तिताः। कर्मचर्मणोरताच्छील्यकोषयोः। ताच्छील्यभिन्ने कर्मणः कोषभिन्ने चर्म्मणो नलोपो न स्यात्। कार्मणः चार्म्मणः अताच्छील्यकोषयोरिति किं कार्मः कर्मशीलः चार्म्मः कोषः। दण्डिहस्तिनः णायने जिह्माशिवासिनोऽणु णेयायन्यौः। दण्डिनो हस्तिनश्च णायने नलोपो न स्यात् जिह्माशिवासिनोस्तु क्रमात् णेयायनौः दण्डिनोऽपत्यं दाण्डिनायनः एवं हास्तिनायनः जैह्माशिनेयः वासिनायनिः। अथर्वणः णिके। अथर्वणा कृतो ग्रन्थः अथर्वा तमधीते वेत्ति वा आथर्वणिकः। शैवा इत्यादि। शिवस्यापत्यमिति वाक्यम्। शिव तच गङ्गा ककुभी मयूरी वतण्ड भूमी मुनि सन्धि यस्काः। पृथा विपाशा तृणकर्ण कुम्भा मण्डूक बोधान भिमान चण्डाः। इत्याक खञ्जावक रेखकर्णाः खञ्जाल कोलच सुपिष्ट पीलाः। खदूरको भूमिलता कपिष्टाः पिञ्जारको हृणिक कोकिलेलाः। पटको वर्त्तनः शीफी विरूपाचः कलन्धनः। मञ्जीरको जरत्कारु कहोड़ा लेख पीवराः। अयस्थूणो वधिरक उत्क्षेपा प्रोष्ठवर्त्तुलौ। कुञ्चा जटिलको गोभिलकोत्कुर्य्यौ भनन्दनः। खर्जूरको नभिम्लानः ककुत्स्थः पौष्टिकस्तथा। ऋषिषेण कुठाराख्ये श्वेत लोहितिका अपि। ऊर्णनाभश्च पिटकः सपत्नी पौष्टिकस्तथा। तक्षशाला जलह्रद कुर्द्दंष्यन्थक हृणायः। अत्वद्या मानुषी संज्ञा नदीसंज्ञा मता इह। भारद्वाजे तु शुङ्गः स्यादात्रेये छगली भवः। वाम्यत् विकर्णोऽथ चीरह्रदः परिषकोऽपि च। दशरथोऽथ कुलीनश्च कन्यायाः णो भवेत्तथा। त्रिवेण्यास्त्रिवणो विश्रवसस्तु वरणोऽपि च। विश्रवणो मनीर्वा सन् गणसूत्रप्रमाणतः। इञादन्तानां पाठः णिवाधनार्थः इञजिकारान्तानां स्त्रीत्यान्तानां णेयबाधनार्थः तक्षन् शब्दस्य कारुवाचकत्वात् णिवाधनार्थः तक्षणोऽपत्यं ताक्षणः मनवर्जान् इति अनन्तत्वात् नलोपो न स्यात् कुर्वादित्वात् ताक्षण्यः। गङ्गाया

अपत्यं गाङ्गः। अच्चादित्वात् गाङ्गेयः तिकादित्वात् गाङ्गायनिः। पीलाया अपत्यं पैलः अच्चादेराकृतिगणत्वात् पैलेयः परं तु क्वचित् अपवादविषये उत्सर्गेऽपि निविशत इति न्यायात् इत्याद्यः एवं शालाया अप्यूहनीयम् जरत्कारुशब्द उदन्त-त्वात्वादिपाठात्। ऋषिशिवशब्दस्यानन्तत्वात् णाणिबाधनार्थः। कुरुवंशोत्पन्ना ऋषिवाचका अन्धकवंशोत्पन्ना वृष्णिवंशोत्पन्नाश्च सर्वे शिवादौ पठ्यन्ते। कुरौ नाकुलः साहदेवः ऋषिः। मूले वाशिष्ठ इति वशिष्ठस्यापत्यम् इति वाक्यम् एवं वैश्वामित्रः। अन्धकस्य श्वाफल्कः लौरसः। वृष्णौ वासुदेवः आनिरुद्ध इत्यादि। ननु सर्वेषां व्याकरणानां माहेशमूलकत्वेनाधुनिककुर्वृष्ण्यन्धकवृष्णिवंशवाचकानां कथं शिवादौ पाठ इति चेत् सत्यं शिवस्य सर्वज्ञत्वात् तत्र तेषां सङ्कलनं यद्वा ऋषेरना-दित्वात् कुर्वृष्ण्यन्धकवृष्णिवंशा एवानादयः। अतएव तेभ्यस्त्वविधानमित्यदोषः। अवृद्धानां मानुषीसंज्ञानां तावत्, चिन्तिताया अपत्यं चैन्तितः शैचितः गौतमः। अवृद्धानां नदीसंज्ञकानां तावत्, यमुनाया अपत्यं यामुनः इरावत्या अपत्यं ऐरा-वतः नार्मद इत्यादि। अवृद्धा इति किं वासवदत्तेयः चान्द्रभागेयः शुङ्गस्यापत्यं शौङ्गो भारद्वाजः अन्यत्र शौङ्गिः। छगलस्यापत्यं छागलः आत्रेयः अन्यत्र छागला-यनिः विकर्णस्यापत्यं वैकर्णो वात्स्यः अन्यत्र वैकर्णिः कन्याया अपत्यं कानीनः कर्णः व्यासश्च। त्रिवेण्या अपत्यं त्रैवेणः। विश्रवसोऽपत्यं वैश्रवणो रावणः वैश्रवणश्च मनोरपत्यं इत्यर्थे णः तस्मिन्ननौ सन् वा न इत् मानुषः पक्षे मानवः इति। विदादेर्गोत्रेऽनृषेस्त्वानन्तर्ये ट्नः। विदस्यान्तरापत्यं वैदः और्वः स्त्रियां षित्वादीप् वैदी इत्यादि। विदादिर्यथा। विद उर्वो भरद्वाजः किलातः कुशिको हरित्। विश्वानरः काश्यपापस्तम्बौ वृद्धरथो भरौ। कुचवारशरद्वन्तौ रथन्तर-गविष्ठिरौ। ऋषिषेणश्च किन्दर्भो मठरोऽथ विविष्टपिः। पुनर्भूर्दुहितापुत्रः प्रति-बोधननान्दरौ। हर्य्यश्वः प्रियकौ धेनुवध्योगशुनकावपि। ऋतभागश्च किन्दासो व्ययस्कार्कोकरावपि। महाकुलः पृदाकुश्च निषादोऽथ परस्त्रियाः। परशृङ्गं स्याङ्गोपवलः शिशुभामजविन्दवः। अश्वावतारश्यामाकसुपर्णाः समुदीरिताः। अत्र ये शब्दा अनृषिवाचकास्तेभ्यो गोत्रवाचकेभ्योऽन्तरापत्य एव ट्नः। अतएव पौत्रः पौनर्भवः दौहित्रः इत्यादि। ननु कथं, वा कुशिकास्यन्तरापत्यं कौशिको विश्वा-मित्रः कथं व्यवहितापत्ये इन्द्रह्नर्नाम सप्तमः काश्यपानां ब्वे लुगिति चेत् सत्यं क्वचिदपवादविषयेऽप्युत्सर्गो निविशत इति न्यायात् ऋषिणेन भवितव्यम् अथवा तस्येदमित्यर्थे णेन। परस्त्रिया अपत्यं पारशवः ट्नः परशवादेशः। अत परस्त्री-

## ४२५ । संख्यासंभद्रान्मातुर्डुर्षो ।

संख्या-सं-भद्रात् ५।, मातुः ६।, डुर् ।१।, षो ७। ।

**द्वैमातुरः ।**

---

शब्देन भिन्नजातीया स्त्री वाच्या अतएव पारशवी विदुरः तथाच पारशवः पुमान् परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च इति मेदिनीकारः । अर्थान्तरे तु पारस्त्रैणेयः बाह्वादेराकृतिगणत्वात् विदस्यान्तरापत्यं वैदिरित्यादौ णिः न तु ऋषिणः । यद्यपि शिवादित्वात् णे कृते वैद इत्यादि सिद्धे विदादेः पृथक् ट्नविधानं मवङ्बाधनार्थम् । उत्सादिः । उत्सादेष्ट्नः स्यात् पृथक्योगादपत्यसामान्ये । उत्सस्यान्तरापत्यम् औत्सः जानपद इत्यादि उत्सादिर्यथा—उत्सो जनपदविनदौ धन्वा विकच महानदः तरुणं धेनुः । भरत महानस पृथिवी देवं पंक्तिर्जगती कुरुपञ्चालम् । उदप्रणो महाप्राणः ककुभस्तनुनी महान् । इन्द्रावसान विकारस्त्रिष्टुबुष्णिगनुष्टुभः । उशीनरः सुवर्णश्च भल्लकीयो रथन्तरः । वृहन्मध्यन्दिनश्चाथ सत्वती नुण् भवेदिह । उदस्थानन्तु देशे सि वयस्कोऽंशे वृषन्मतः । ग्रीष्मोऽच्छन्ते समाख्यातः शेषं ज्ञेयं प्रयोगतः । इह कुरुशब्दस्य पाठात् कुरोरपत्यस् इत्यर्थे कौरवः इति जयादित्यः । सत्वत्शब्दो वलन्तस्तस्य ट्नः नुण् सत्वतोऽपत्ये सात्वन्तः पाठवलात् उदस्थाने भव औदस्थानी देशः । अदेशे तु उदस्थानः कश्चित् तस्यापत्यम् औदस्थानिः । वृषदशब्दोऽंशे वाच्ये ट्नः वार्षदः अनंशे तु वार्षदः णः । ननु णट्नयोः को विशेषः इति चेत् सत्यं णान्तवार्षदस्य सङ्घे वार्षदकः । ट्नान्तस्य तु वार्षद इति विशेषः । अच्छन्त इति वृत्तं छन्दः तस्मिन् ग्रैष्मः अच्छन्त इति किं ग्रैष्मी त्रिष्टुबिति ऋतुनक्षत्रादिति णः तस्माद्विकारे मयट् ग्रैष्ममयं ट्नान्ताद्विकारे ग्रैष्ममिति विशेषः ॥ ४२४ ॥

संख्यावाचकेभ्यः समो भद्राच्च परस्य मातृशब्दस्य डुर् स्यात् षो ङिन्त्यादन्त्यस्य स्थाने । डुरो रेफस्य विसर्गाभावः स्पष्टार्थः द्वयोर्मात्रोरपत्यं द्वैमातुरः । अत तद्धितार्थे विषये द्विगौ शेषत्वात् णे कृते एकपदीभावात् द्वेरिकारस्य वृद्धिः । एवं तिसृणां मातॄणामपत्यं त्रैमातुरः, षण्णां मातॄणामपत्यं षाण्मातुरः संमातुरपत्यं सांमातुरः एवं भाद्रमातुरः ॥ ४२५ ॥

श्रीरा-टी—संख्या च सम् च भद्रश्च तत्तस्मात् संख्यावाचकात् समो भद्राच्च मातृशब्दस्य डुर् स्यात् षो । ङितादन्त्यस्य लोचलात्र त्रिः द्वैमातुर इति द्वयोर्मात्रोरपत्यमिति वाक्यं शेषात् षः एवं षाण्मातुरः ॥ ४२५ ॥

४२६। नन् पुंस्त्रियोः।

नन् ।१।, पुंस्त्रियोः ६॥।

पौंस्नः स्त्रैणः।

४२७। कुञ्जादेर्णायन्योऽस्त्रीब्वेऽपत्ये।

कुञ्जादेः ५।, णायन्यः १।, अस्त्रीब्वे ७।, अपत्ये ७।।

कुञ्जादेरपत्यार्थे णायन्यः स्यात् न तु स्त्रियां न च ब्वे। कौञ्जायन्यः ब्राध्नायन्यः। स्त्रीब्वे तु। कौञ्जायनी कौञ्जायनाः।

---

अनयोर्नन् स्यात् णे नित्त्वादन्ते। नकारोऽदन्तः। पुंसोऽपत्यं पौंस्नः तत्र णे परे पुम्स्शब्दस्य ननि कृते नकारस्य प्रकृत्यवयवत्वेन दान्तत्वाभावात् सकारस्य लोपो न स्यात्। ययोर्लोप इति नकारस्य अकारलोपः। स्त्रिया अपत्यं स्त्रैणः एवम् इदमाद्यर्थे णे कृतेऽपि नन् स्यादेव। तेन पुंस इदं पौंस्नम् कर्म। स्त्रिया इदं स्त्रीणां समूहो वा स्त्रैणम्॥ ४२६॥

गौरा-टी—पुमांश्च स्त्री च ते तयोः॥ ४२६॥

स्त्री च ब्वश्च स्त्रीब्वं न स्त्रीब्वम् अस्त्रीब्वं तस्मिन्। कुञ्जादिर्नड़ाद्यन्तर्गणः। कुञ्जस्यापत्यं कौञ्जायन्यः णित्त्वाद् वृद्धिः। ब्रध्नस्यापत्यं ब्राध्नायन्यः स्त्रीब्वे तु कुञ्जस्य स्त्र्यपत्यं कौञ्जायनी कुञ्जस्यापत्यानि कौञ्जायनाः इत्युभयत्र नड़ादित्वात् णायन एव। केचित्तु कुञ्जादेः प्रथमापत्ये णायन्यः णायनोऽपि न स्यात् अदन्तत्वात् णिरेव तेन कुञ्जस्य प्रथमापत्यं कौञ्जिरिति प्राहुः। कुञ्जादिस्तु। कुञ्ज ब्रध्न शङ्ख भस्मन् लोमन् गण शट शाक शुण्डा शुभा विपाश स्कन्द स्तम्भ इत्यादि। १३। तिकादिर्नड़ाद्यन्तर्गणत्वात् अपत्यार्थे णायनः तदन्तस्य प्रयोगाभावाद्व्यवहारोलिवत् णायनान्तात् स्वार्थे णिः। यथा तिकस्यापत्यं तैकायनिः। तिकादिस्तु। तिक कितव संज्ञा बाल शिखा शाल्या कौशल्या सैन्धव मुञ्ज रूप्य ग्राम्य नीड़ कुरु दैवरथ तण्डिल औरस लाङ्गट गोकक्ष वनियार्थ कौरव्य गोकर्ण भौरिकि भौलिकि तैकयत चैकयत वैकयत सैकयत ध्वाजयत चन्द्रमस् उरस् अमित्र शुभ्र गङ्गा वारुणा वस्त आवटी वल्यका खल्यका लोमका सुयामन उदन्य यज्ञवल्क गवेठ काकण्टा काक लङ्का चर्मिण इत्यादि। ४७। एवं त्यदादेर्नड़ाद्यन्तर्गणत्वात् णायनः तदन्तस्य प्रयोगाभावात्

## ४२५। संख्यासंभद्रान्मातुर्डुर्ष्णे।

संख्या-सं-भद्रात् ५।, मातुः ६।, डुर् ।१।, ष्णे ७।।

द्वैमातुरः।

---

शब्देन भिन्नजातीया स्त्री वाच्या अतएव पारशवी विदुरः तथाच पारशवः पुमान् परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च इति मेदिनीकारः। अर्थान्तरे तु पारस्त्रै-णेयः बाह्वादेराकृतिगणत्वात् विदस्यानन्तरापत्यं वैदिरित्यादौ णिः न तु ऋषिष्णः। यद्यपि शिवादित्वात् ष्णे कृते वैद इत्यादि सिद्धे विदादेः पृथक् ट्नविधानं मवद्बाध-नार्थम्। उत्सादिः। उत्सादेष्ट्नः स्यात् पृथग्योगादपत्यसामान्ये। उत्सस्यानन्तरापत्यम् औत्सः जानपद इत्यादि उत्सादिर्यथा—उत्सो जनपदविनदौ धन्वा विकाच महा-नदः तरुण धेनुः। भरत महानस पृथिवी देवं पंक्तिर्जगती कुरुपञ्चालम्। उद-प्रणो महाप्राणः ककुभस्तनुनी महान्। इन्द्रावसान विकारचित्रिष्टुबुष्णिगनुष्टुभः। उशीनरः सुवर्णश्च भल्लकीयो रथन्तरः। वृहन्मध्यन्दिनश्चाथ सत्वती नुण् भवेदिह। उदस्थानन्तु देशे से वयस्कोऽंशे वृषन्मतः। ग्रीष्मोऽच्छन्दे समाख्यातः शेषं ज्ञेयं प्रयोगतः। इह कुरुशब्दस्य पाठात् कुरोरपत्यम् इत्यर्थे कौरवः इति जयादित्यः। सत्वत्शब्दो वत्वन्तस्तस्य ट्नः नुण् सत्वतोऽपत्यं सात्वन्तः पाठवलात् उदस्थाने भव औदस्थानो देशः। अदेशे तु उदस्थानः कश्चित् तस्यापत्यम् औदस्थानिः। वृषद-शब्दोऽंशे वाच्ये ट्नः वार्षदः अनंशे तु वार्षदः ष्णः। ननु ष्णट्नयोः को विशेषः इति चेत् सत्यं ष्णान्तवार्षदस्य सङ्घे वार्षदकः। ट्नान्तस्य तु वार्षद इति विशेषः। अच्छन्द इति छन्दः छन्दः तस्मिन् ग्रैष्मः अच्छन्द इति किं ग्रैष्मी त्रिष्टुबिति ऋतुनक्षत्रादिति ष्णः तस्माद्विकारे मयट् ग्रैष्ममयं ट्नान्ताद्विकारे ग्रैष्ममिति विशेषः॥ ४२४॥

संख्यावाचकेभ्यः समो भद्राच्च परस्य मातृशब्दस्य डुर् स्यात् ष्णे ङिन्त्यादन्त्यस्य स्थाने। डुरो रेफस्य विसर्गाभावः स्पष्टार्थः द्वयोर्मात्रोरपत्यं द्वैमातुरः। अत्र तद्धि-तार्थे विषये द्विगौ शेषत्वात् ष्णे कृते एकपदीभावात् द्वेरिकारस्य वृद्धिः। एवं तिसृणां मातृणामपत्यं त्रैमातुरः, षण्णां मातृणामपत्यं षाण्मातुरः संमातुरपत्यं सांमातुरः एवं भाद्रमातुरः॥ ४२५॥

श्रीरा-टी—संख्या च सम् च भद्रश्च तत्तस्मात् संख्यावाचकात् समो भद्राच्च मातृशब्दस्य डुर् स्यात् ष्णे। ङितादन्त्यस्य सौत्रत्वान्न त्रिः द्वैमातुर इति द्वयोर्मात्रो-रपत्यमिति वाक्यं शेषात् ष्णः एवं षाण्मातुरः॥ ४२५॥

## ४२६। नञ् पुंस्त्रियोः।

नञ् ।१।, पुंस्त्रियोः ६॥।

**पौंस्नः स्त्रैणः।**

## ४२७। कुञ्जादेर्णायन्योऽस्त्रीब्वेऽपत्ये।

कुञ्जादेः ५।, णायन्यः १।, अस्त्रीब्वे ७।, अपत्ये ७।

**कुञ्जादेरपत्यार्थे णायन्यः स्यात् न तु स्त्रियां न च ब्वे। कौञ्जायन्यः ब्राध्नायन्यः। स्त्रीब्वे तु। कौञ्जायनी कौञ्जायनाः।**

---

अनयोर्नञ् स्यात् णे नित्वादन्ते। नकारोऽदन्तः। पुंसोऽपत्यं पौंस्नः तत्र णे परे पुम्स्शब्दस्य नञि कृते नकारस्य प्रकृत्यवयवत्वेन दान्तत्वाभावात् सकारस्य लोपो न स्यात्। ययोर्लोप इति नकारस्य अकारलोपः। स्त्रिया अपत्यं स्त्रैणः एवम् इदमाद्यर्थे णे कृतेऽपि नञ् स्यादेव। तेन पुंस इदं पौंस्नम् कर्म। स्त्रिया इदं स्त्रीणां समूहो वा स्त्रैणम्॥ ४२६॥

श्रीरा-टी—पुमांश्च स्त्री च ते तयोः॥ ४२६॥

स्त्री च ब्वश्च स्त्रीब्वं न स्त्रीब्वम् अस्त्रीब्वं तस्मिन्। कुञ्जादिर्नड़ाद्यन्तर्गणः। कुञ्जस्यापत्यं कौञ्जायन्यः णित्वाद् वृद्धिः। ब्रध्नस्यापत्यं ब्राध्नायन्यः स्त्रीब्वे तु कुञ्जस्य स्त्र्यपत्यं कौञ्जायनी कुञ्जस्यापत्यानि कौञ्जायनाः इत्युभयत्र नड़ादित्वात् णायन एव। केचित्तु कुञ्जादेः प्रथमापत्ये णायन्यः णायनोऽपि न स्यात् अदन्तत्वात् णिरेव तेन कुञ्जस्य प्रथमापत्यं कौञ्जिरिति प्राहुः। कुञ्जादिस्तु। कुञ्ज ब्रध्न शङ्ख भस्मन् लोमन् गण शट शाक शुण्डा शुभा विपाश स्कन्द स्तम्भ इत्यादि। १३। तिकादेर्नड़ाद्यन्तर्गणत्वात् अपत्यार्थे णायनः तदन्तस्य प्रयोगाभावाद्व्यवहारोतिवत् णायनान्तात् स्वार्थे णिः। यथा तिकस्यापत्यं तैकायनिः। तिकादिस्तु। तिक कितव संज्ञा बाल शिखा शाला कौशल्या सैन्धव मुञ्ज रूप्य ग्राम्य नीड़ कुरु देवरथ तण्डिल औरस लाङ्कट गोकक्ष चत्रियार्थ कौरव्य गोकर्ण भौरिकि भौलिकि तैकयत चैकयत वैकयत सैकयत भ्राजयत चन्द्रमस् उरस् अमित शुभ गङ्गा वारुणा बन्ध आवटी वध्रका खल्यका लोमका सुयामन उदन्य यज्ञवल्क गवेठ काकरुटा काक लङ्का चर्मिण इत्यादि।४७। एवं त्यदादेर्नड़ाद्यन्तर्गणत्वात् णायनः तदन्तस्य प्रयोगाभावात्

स्वार्थे णिः। यथा तस्यापत्यं तादायनिः एवं याद्दायनिः। कैमायनिः एवञ्च त्यदादेः शिवाद्यन्तर्गणत्वात् णः। यथा त्यस्यापत्यं त्यादः यादः कैमः ॥ ४२७ ॥

श्रीरा-टी—स्त्री च क्ली च स्त्रीक्लं न स्त्रीक्लम् अस्त्रीक्लं तस्मिन्। अपत्यग्रहणं पूर्वेत्र सामान्यविधानात् अयं नड़ाद्यन्तर्गणः णायन्येन णायनी बाध्यते तेनानन्तरापत्ये कौञ्जिः कौञ्जायन्यः इति कुञ्जस्यान्तरापत्यमिति वाक्यम् एवं ब्राध्नायन्यः। कुञ्जादिर्यथा। कुञ्जी ब्रध्नी बुधी लोम भस्म शङ्खाः शटी गणम्। शीकः शुभा विपाशा च शुण्डा स्कसः प्रकीर्त्तितः। तिकादेर्नायनिर्वृषादेस्तु यम् च। तिकादेरपत्ये नायनिः स्यात् वृषादेस्तु नायनेर्यम् च न इत्। तिकस्यापत्यं तैकायनिः कितवस्यापत्यं कैतवायनिः। तिकादिर्यथा। तिककितवौ वस तौतिल नील भौरिकि भौलिकि वस्तारव्यं चौपयतः कुरुसंज्ञा यज्ञ गङ्गा लाङ्कट शूद्रय सुत्रम्। खल्यका लोमका-रूप्य ग्राम्यध्वाजायता उरः। शाव्या बालशिखा वैङ्कयतः सैकयतस्तथा। चैकयतः स्यामीऽथ कौरव्यः क्षत्रिये मतः। गौकक्ष्यश्चान्दमाचै जयती रथालदा मताः। द्वास्त्रः शान्ता दैवरथोऽमित्री दृश्यं प्रकीर्त्तितः। क्षत्रियार्थे कौरव्यः पठ्यते तेन जनपदणान्तस्य न तु कुर्वादिण्यान्तस्य, स तु ब्राह्मणवचनस्तस्मात् णोर्लुगेव जनपद-णस्तु कुरोरपत्यं युवा कौरव्यायणिः क्षत्रियः। रथान्तात्तावत् गौरक्षस्यापत्यं गौरक्षायणिः कार्माय्यायणिः कुर्वादित्वात् कार्माथ्यः। कौशली शब्दो जनपदवचनः। ननु कथं कौशल्यायनि वल्लभामिति भट्टिः। उच्यते नृजातेरिति ईपि कौशल्या-यनी तस्यापत्यं युवा इत्यर्थे आवादित्वात् णेयस्तस्य लुकं विधाय स्त्रीत्यस्य लुकि कौशल्यायनिरिति परे वस्तुतस्तु तिकादेराकृतिगणत्वात् नायनिरिति तथा च कौशल्यकार्माय्याभ्याञ्चेति पाणिनिसूत्रम्। वृद्धादनपत्याद्द वा पुत्रान्ताद्द ब्रा किलादे-स्तुकश्च। अनपत्यात्ताद्द वृद्धसंज्ञकात् नायनिर्वा स्यात् पुत्रान्तात् वा किलादिभ्यश्च तेषां तुकन् च न इत्। आमगुप्तस्यापत्यम् आमगुप्तायनिः नापितायनिः एवं त्यादायनिः तवापत्यं त्वादायनिः युवयोर्युष्माकं वा अपत्यं यौषदायनिः कथं भारतायनिः वाशब्दस्य व्यवस्थावाचित्वात् पक्षे आमगुप्तिः नापितिः नाप्रित्यः त्याद-स्तस्यापत्यं युवा त्यादायनिः वृद्धादिति किं दैवदत्तिः याज्ञदत्तिः औपगवः। अनपत्या-दिति किम् औपगविः पुत्रान्तात् गार्गी पुत्रकायणिः गार्गी पुत्रायणीति पूर्वेणैव सिद्धे कविधानार्थः पाठः आयनाभावपक्षे गार्गी पुत्रीरिति रूपत्रयं वाकिलादि-त्वात् वाकिलकायनिः वाकिलायनिः वाकिलिः। वाकिलादिर्यथा वाकिलयमि-शावैठौ काकलङ्का तथैव च। कार्कव्यवर्मिणावन्न षड् बुधैः परिकीर्त्तिताः। परे

तु फन् विकल्पयन्ति तन्मते बाकिलादैर्द्वैरूप्यम्। बह्वङ्गादायनिर्वा। वाशब्दो बह्व-र्थार्थः बह्वसंज्ञकभिन्नादायनिर्वा स्यात् अपत्ये। ग्लुचुकस्यापत्यं ग्लुचुकायनिः पक्षे ग्लौचुकिः। आह्विचुम्बकायनिः आह्विचुम्बकिः बाहुल्यात् क्वचिन्न भवति तेन दक्ष-स्यापत्यं दाक्षिः प्लाक्षिरित्यादि। यूनि लुक् नायनेः णस्य। नायने परस्य यूनि विहितस्य णस्य लुक् स्यात्। तिकस्यापत्यं तैकायनिः तस्यापत्यं युवा तैकायनि-रित्यादि। कुलाददादिनो येन णेयका दादेस्त्वीनः। दादिभिन्नात् कुलात् य इन णेयक एते स्युः दपूर्वादीन एव। कुलस्यापत्यं कुल्यः कुलीनः कौलेयकः बहुकुल्यः बहुकुलीनः बाहुकुलेयकः। बहुलयस्यादत्वात् दादेस्तु आढ्यकुलीनः श्रोत्रियकुलीनः। दुर्महद्भ्यां णेयकनीनो वा। आभ्यां परात् कुलात् णेयकनीनो क्रमाद्वा स्याताम्। दौष्कुलेयकः। अन्यादित्वात् दौष्कुलेयः पक्षे दपूर्वत्वात् दुष्कुलीनः महाकुलीनः उत्सादित्वात् माहाकुलः पक्षे महाकुलीनः। क्षत्रादि यो जातौ। क्षत्रशब्दाज्जाता-वपत्ये इयः स्यात् क्षत्रियः जातिः। जाताविति किं क्षात्रिः। सौवीरगोत्रात् फाण्टाहृतिमिमतात् णणायनी। सौवीरगोत्रात् फाण्टाहृतिमिमताच्च णणायनी स्यातां फाण्टाहृतेरपत्यं फाण्टाहृतः। सौवीरगोत्रत्वात् यून्यस्य विषयः फाण्टाहृता-यनिः एवं मिमतस्यापत्यं मैमतः मैमतायनिः। परे तु अल्पाच्छब्दस्य व्युत्क्रम-निर्देशात् यथासंख्यमिच्छन्ति तन्मते फाण्टाहृतः मैमतायनिः इत्येव। सौवीरगोत्रा-दिति किं फाण्टाहृतायनः। मैमतायनः। देवपृथिवीभ्यां यणौ वा। आभ्यां क्रमात् यणौ वा स्यातामपत्ये। देवस्यापत्यं देव्यः पृथिव्या अपत्यं पार्थिवः स्त्रियां देव्या पार्थिवा उत्सादित्वात् दैवः पार्थिवः दैवी पार्थिवी। थामान्तादो लोमा-न्तात्तु बे। थामन् इत्यन्तादः स्यात् लोमन्नन्तात्तु बे। अश्वत्थामा नाम कश्चित् तस्यापत्यम् अश्वत्थामः उडुलोम्नोऽपत्यानि बहूनि उडुलोमाः। बे किम् औडु-लोमिः औडुलोमी। रूढाद्राज्ञि च टः णस्तुद्व्यङ् मगध कलिङ्ग शूरमसात्। अपत्ये राज्ञि च देशतुल्याख्यक्षत्रियात् टः स्यात् द्व्यङ् मगधादेस्तु णः पञ्चालानामपत्यं राजा वा इत्यर्थे पाञ्चालः वैदेहः। द्व्यजादेस्तु आङ्गः वाङ्गः सौह्मः मागधः कालिङ्गः शौरमसः। रूढादिति किं पञ्चालस्य ब्राह्मणस्यापत्यं पाञ्चालिः। वृद्धे कोशला-जादाद्गान्धारिशाल्वेयात् ण्यङ्। गान्धारिशाल्वेयभिन्नात् वृद्धादिकारात् कोशला-दजादाच्चापत्ये राजनि च ण्यङ् स्यात् टणयोरपवादः आम्बष्ठस्यापत्यं राजा वा आम्बष्ठ्यः सौवीरस्यापत्यं राजा सौवीर्यः। कुन्तेर्जनपदक्षत्रियस्यापत्यं राजा वा कौन्त्यः अवन्तेरावन्त्यः कोशलस्य कौशल्यः आजात्यः स्त्रियामजादित्वादाप् आजात्या।

## ४२८। गर्गयस्कविदादि-भृग्वत्रि-कुत्साङ्गिरो वशिष्ठ गोतम-रूढ़ाल्लुक् ष्णे ऽस्त्रियाम्।

गर्ग—रूढ़ात् ५।, लुक् ।१।, ष्णे ७, अस्त्रियां ७।

देशतुल्याख्यः क्षत्रियो रूढ़ः। एभ्यः परेषामुक्तानां त्यानां ष्णे विहितानां लुक् स्यात् न तु स्त्रियाम्।

गर्गाः वत्साः यस्काः लह्याः विदाः उर्व्वाः भृगवः अत्रयः कुत्साः अङ्गिरसः वशिष्ठाः गोतमाः अङ्गाः वङ्गाः कलिङ्गाः। स्त्रियान्तु भार्ग्यव्यः।

---

कौन्त्यावन्त्योश्च कुन्ती अवन्ती कुरुकुन्त्यवन्तिभ्योऽपत्यस्य लुकि नृजातेरिति ईपि ङित्वात् पतिपुत्रादौ यङ् ई आम्बष्ठीपतिः आम्बष्ठीपुत्र इत्यादि। गान्धारिशाल्वेया तु गान्धारः शाल्वेयः पूर्व्वेण ट्नः। कुरुन्यादिभ्यो ण्यः पाण्डोर्ड्यिञ्च। कुरोर्निपूर्व्वशब्देभ्यो जनपदेभ्यो ण्यः स्यात् ड्यिञ्च पाण्ड्यः। कुरोर्जनपदस्यापत्यं राजा वा कौरव्यः कथं माघे कुकुरकौवरस्त्रियः तथा संरक्षन्त कौरवा इतिउच्यते जनपदाविवक्षायां विषयो देश इत्यर्थे ण्ण वा तस्येदमित्यर्थे वा। कथमक्षत्रियकौरव्याः परश इत्युपचारात्। न्यादेः निधनस्यापत्यं राजा नैधन्यः नैपुण्यः नैषध्यः पाण्डोर्जनपदस्य क्षत्रियस्यापत्यं राजा वा पाण्ड्यः ड्यिति टिलोपः। रूढ़ इति किं महाभारते पाण्डोरपत्यं पाण्डवः। न हि तस्य पाण्डुर्देशः उडुम्बरादेः ष्णिः। रूढ़ाद्राज्ञि चेति ट्नस्य बाधकः उडुम्बरस्य जनपदस्य क्षत्रियस्यापत्यं राजा वा। औडुम्बरिः तैखलिः। उडुम्बरिस्तिलखली मद्रकारी युगन्धरः। भूलिङ्गः शरदण्डश्च कालकूटीऽश्वकस्तथा। प्रत्यग्रहे नव प्रोक्ताः परे शिष्टप्रयोगतः। कैकय प्रलय मित्र यूनां ष्णित्त्वे यादेरियः। एषां यादेर्भागस्य ष्णित्त्वे इयादेशः स्यात्। कैकयस्यापत्यं कैकेयः प्रलयादागतं प्रालेयं हिमं मित्रयोर्भावः मैत्रेयिका गोत्रचरणाण्णकः॥ ४२७॥

गर्गश्च यस्कश्च विदश्च गर्गयस्कविदाः ते आदयो येषां ते गर्गयस्कविदादयः। आदिशब्दस्य प्रत्येकेन सम्बन्धात्। गर्गादियस्कादिविदादय इत्यर्थः। गर्गयस्कविदादयश्च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिरस् च वशिष्ठश्च गोतमश्च रूढ़श्चेति तस्मात्। यत्र अपत्ये इत्यनुवर्त्तते इत्यत आह उक्तानां त्यानामिति। अपत्यार्थ प्रत्ययाना-

मित्यर्थः। लुक्करणात् त्यलोपे त्यलक्षणमिति न्यायात् वृद्ध्यादिर्न स्यात्। गर्गस्यापत्यानि गर्गा एवं वत्सा आभ्यां अस्य लुक्। यस्कस्यापत्यानि यस्काः एवं लह्याः विदस्यापत्यानि विदाः एवम् उर्वाः भृगोरपत्यानि भृगवः एभ्यः णास्य लुक्। अत्रेरपत्यानि अत्रयः अत्र णेयस्य लुक्। कुत्सस्यापत्यानि कुत्साः अङ्गिरसोऽपत्यानि अङ्गिरसः वशिष्ठस्यापत्यानि वशिष्ठाः गोतमस्यापत्यानि गोतमाः एभ्योऽपि णास्य लुक्। ब्वे किं गार्ग्यः गार्ग्यौ एवं सर्वत्र। एकवचने द्विवचने च प्रत्ययस्थितिः। देशतुल्याख्य इति। देशेन तुल्या आख्या नाम यस्य क्षत्रियस्य स देशतुल्याख्यः क्षत्रियो रूढ़ इत्यर्थः। यथा वङ्गो देशविशेषः वङ्गं पालयतीति ढघेकादिति अनित् णो वङ्गो राजा। वङ्गस्यापत्यानि वङ्गाः एवम् अङ्गाः कलिङ्गाः मत्स्याः पञ्चालाः विदेहाः मगधाः इत्यादयः एभ्योऽपि णास्य लुक्। एषामपि एकत्वद्वित्वयोः वाङ्गः वाङ्गौ इत्यादयो बोध्याः। देशतुल्याख्य इत्युपलक्षणम् कदाचित् प्रसिद्धक्षत्रियोऽपि रूढ़ो वा वक्तव्यः। तथा च गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतमिति। आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति इति च रघुः। पायादपायात् सततं भवन्तं नाथो रघूणामथवा यदूनामित्युद्भटः। स्त्रियान्तु भृगोः स्त्र्यपत्यानि भार्गव्यः अत्र णास्य न लोपः। अपत्यार्थप्रत्ययानामिति किं भृगोरिमे भार्गवा मन्त्रा इति अत्र इदमर्थे कृतस्य णास्य लोपो न स्यात् एवं प्रिया गर्गा यस्य स प्रियगर्गः अत्र समुदायस्य एकत्वेऽपि गार्ग्यशब्दस्य बहुत्वे प्रयुक्तत्वात् णास्य लोपः स्यादेव। एवं प्रियो गार्ग्यो येषां ते प्रियगार्ग्याः अत्र समुदायस्य बहुत्वेऽपि गार्ग्यशब्दस्य एकत्वे प्रयुक्तत्वात् णास्य लोपो न स्यात्। एवं प्रिययस्काः प्रिययस्काः इत्यादयो बोध्याः। यस्कादिस्तु। यस्क लम्भ अय स्थूल तृण कर्णभ नन्दन वहिर्योग कर्णाटक पिण्डी जङ्घावक सूक्त वक्षस् अशर जङ्घारथ उत्कास कटक गन्तुक विषुपद उपरि मेखला क्रौष्टु मास्क क्रौष्टुपाद शीर्षमाण शीर्षमाय पदक कर्षक विशिक्षुचि अजवस्ति भड़िल भण्डिल भड़ित खरप पुष्करसद इति। ३३। विदादिस्तु। विद पुत्र उर्व कश्यप कुशिक भरद्वाज किलात किलदर्भ विश्वानर ऋष्टिषेण ऋतभाग हर्य्यश्व प्रियक अयस्तम्भ कुचराव शरद्वत् शुल्क धेनु इति। १९। यस्कादिर्विदादिश्च द्वावेव शिवाद्यन्तर्गतौ। ततश्च द्वाभ्यामेकगणोक्त्यापि इष्टसिद्धौ गणद्वयकरणं प्राचामनुरोधात्॥ ४२८॥

श्रीरा-टी—गर्गश्च यस्कश्च विदश्च ते आदयो येषां ते गर्गयस्कविदादयः ते च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिराश्च वशिष्ठश्च गोतमश्च रूढ़श्च तत्तस्मात्। रूढ़शब्दस्य

व्युत्पत्तिमाह देशतुल्याख्य इत्यादि तथाच गर्गादि ष्यः यस्कादि ष्य ष्यायनि ञि ष्णेयाः विदादि टः अञि ष्णेयः भृगुकुत्साङ्गिरो वशिष्ठगोतम ष्यः रूढ़ ष्याट्र ण्याङ् ष्यणि इत्येषां ब्वे लुगित्यर्थः । क्रमेणोदाहरति गर्गा इत्यादि । कद्वयोस्तु गार्ग्यः गार्ग्यौ यास्कः यास्कौ वैदः वैदौ भार्गवः भार्गवौ आत्रेयः आत्रेयौ कौत्सः कौत्सौ आङ्गिरसः आङ्गिरसौ वाशिष्ठः वाशिष्ठौ गौतमः गौतमौ आङ्गः आङ्गौ इत्यादि । एवं ब्वे लुगिति किं गर्गाणां धनं गर्गधनम् । अङ्गधनमित्यादि ब्वे विहितानां त्यानामिति किं गार्ग्यस्य वात्स्यस्य आग्निवेश्यस्य ते गार्ग्यवात्स्याग्निवेश्याः एवं गार्ग्यौ च वात्स्यौ च आग्निवेश्यौ च ते गार्ग्यवात्स्याग्निवेश्या इत्यादौ लुग् न स्यात् । पारैकदेशिनस्तु एकवचनान्तानामपि द्वन्द्वसमार्थे वाक्ये समासे एकार्थीभावात् सहभावविवक्षायां बहुत्वे लुगित्याहुः । तेन गर्गवत्साग्निवेशा इति उदाजह्रुः । प्रियवाङ्गा इत्युदाजह्रुरिति । गर्गविदादौ उक्तौ । यस्कादिर्यथा । यस्को लच्चव्दोयस्तृणकलन्दतुर्णकर्णाः । भण्डितखरुभाङ तथा रूपा भाङ सदा मत्तः । क्रोष्टु मायी वह्वियोगः कखलीहारकर्षकौ । क्रोष्टमाली विषपुटौ परिमेखलपादका: कर्णाटकः क्रोष्टुपादस्तथा कटुकमन्यकः । वकाशकः शीर्षमायः पिण्डीजङ्घस्तथैव च । जङ्घारथः शीर्षमाथलज्जारचाऽसुरास्तथा । उपकाशीऽजवस्तिश्च विंशिः त्रुद्रिरिमे त्रयः । यस्कादयः षट् शिवादयः भण्डितादयः पञ्च नड़ादयः अजवस्त्यादयस्त्रयः अत्र्यादयः । शेषाणामदन्तत्वात् ञिः यस्कादेराकृतिगणत्वात् पुष्करसच्छब्दोऽपि तेन पौष्करसादिः पौष्करसादौ ब्वे पुष्करसदः । बह्वचो गोत्रस्य प्राच्यभरतेषु । बह्वचः शब्दात् प्राच्यभरतगोत्रविहितस्य त्यस्य लुक् स्यात् ब्वे । पन्नागारस्यान्तरापत्यं पान्नागारिः पान्नागारौ ब्वे पान्नागाराः । भरतगोत्रे यौधिष्ठिरिः यौधिष्ठिरौ युधिष्ठिराः । एवमार्जुनिः आर्जुनौ अर्जुनाः । बह्वच इति किं भैमिः भैमौ भैमयः । अगस्त्यकुण्डिल्योरगस्तिकुण्डिनौ च । आभ्यां गोत्रत्यस्य ब्वे लुक् स्यात् लुकि सति अगस्तिकुण्डिल्योरगस्तिकुण्डिना वादेशौ क्रमात् स्तः । अगस्त्यस्यान्तरापत्यम् ऋषिणा: आगस्त्यः आगस्त्यौ ब्वे अगस्तयः । कुण्डिल्या अपत्यं गर्गादित्वात् कौण्डिल्यः कौण्डिल्यौ कुण्डिनाः । तिककितवादेश्च ब्वे । गोत्रविहितस्य त्यस्य चे लुक् स्यात् ब्वे । तैकायनयश्च कैतवायनयश्च ते तिककितवाः । उपलमकाः कुञ्जककुभाः उरोलङ्कटाः अग्निवेषकशेरुका बङ्करमखीरथाः पापकनरकाः वररथाः श्वगुरपरिगड्ढाः लङ्काशान्तमुखाः कृष्णाजिन कृष्णसुन्दराः अष्टकपिष्ठिलाः इत्यादि । चे किं तैकायनयः कैतवायनयश्च ब्वे किं

तैकायनिश्च कैतवायनीश्च तैकायनी कैतवायनी। उपकादिभ्यो वाचे च। उपकादिभ्यो व्वे विहितस्य गोत्रत्यस्य अचे चे च व्वे लुक् स्यात् वा। उपका: औपकायना: नमका: नमकायना: औपकायनाश्च नामकायनाश्च उपकनमका: औपकायननामकायना:। उपकादिर्यथा। उपकनमकसुपिष्टमयूर जटिलकवधिरकवर्णिकाकर्णम्। पिष्टकपिञ्छिलभावी जङ्गानुजकमलाखनकलसी कण्ठम्। कासकृत्स्नो निदाघश्च मन्दक: कृष्णसुन्दर:। कृष्णादिनावतारश्च भष्टक: कृष्णपिङ्गल:। उन्दुकग्राहकण्ठी चाकटावककुसीतकौ। अनुलोमा प्रतिहत: प्रतालिश्च जपथस्तथा। उपकनमकौ नडादौ सुपिण्डादय: शिवादय:। अनुलोमनबाह्वादि: शेषाणामदन्तलात् णिप्राप्ति:। व्वे किं औपकायनश्च नामकायनौ च औपकायननामकायना: गर्गविदादय: कद्दयो: ये। गर्गादेर्विदादेश्च ये वर्त्तमानस्य कद्दयोर्विहितस्य गोत्रत्यस्य लुक् स्यात् वा। गार्गस्य गार्गयोर्वा धनम् गर्गधनं गार्गधनम् एवं वैदस्य वैदयोर्वा धनं विदधनं वैदधनम्। रूढ़ात् कम्बोजादेर्नित्यम्। कम्बोआदे रूढ़ात् उत्पन्नराजापत्यत्यस्य लुक् नित्यं स्यात्। कम्बोजजनपदस्यापत्यं राजा वा कम्बोज: कम्बोजौ कम्बोजा:। कम्बोज: केवलश्चोलभोजनिन्दखश्शा: शव इत्यादि। स्त्रियाम् कुरुकुन्त्यवन्तिभ्य:। एभ्यो राजापत्योत्पन्नत्यस्य स्त्रियां लुक् स्यात्। कुरोर्जनपदस्यापत्यं स्त्री राज्ञी वा कुरू: उत इत्यादिना ऊप् एवं कुन्ती अवन्ती। एङ्को लुकि नृजातेरित इति ईप्। अतश्चाप्राच्यभर्गयौधेयादे:। प्राग्गोत्रभर्गादियौधेयादिभिन्नाद्राजापत्योत्पन्नस्य अतत्यस्य स्त्रियां लुक् स्यात्। शूरसेनस्यापत्यं स्त्री राज्ञी वा शूरसेनी इड़विड़ोऽपत्यं स्त्री राज्ञी वा इड़विड़ी इत्यत्र ट्रस्य मद्रस्यापत्यं स्त्री राज्ञी वा मद्री दरदोऽपत्यं स्त्री राज्ञी वा द्व्यच: णास्य वा लुक् लुकि जातेरत इति ईप् मद्रशूरसेनाभ्याम्। अत इति किं कोशल्या आजाद्या। अप्राच्यभर्गयौधेयादेरिति किं पाञ्चाली वैदेही मागधी आङ्गी वाङ्गी सौङ्गीत्यादि। भर्गादि: भार्गी कैकेयी। कथं प्राक् कैकयीतो भरतस्ततोऽभूत् आद्यप्रकृतेर्व्वे नदादिपाठात् भागवृत्ति:। भर्गादिर्यथा भर्ग: करूश: कश्मीर: कौरव: सुस्थकेकयौ। शाल्वोऽनुसवश्चैव भर्गादि: परिकीर्त्तित:। यौधेयादे: यौधेयी शौभ्रेयीत्यादि। स्त्रियामिति चकारेणानुकर्षणान्न व्वमत्र। नगोपरणादे:। गोपरणादेर्गोत्रत्यस्य लुङ्न स्यात्। अयं विदाद्यन्तर्गण:। गौपरणी गौपरणा: गौपरणस्य गौपरणयो: कुलं गौपरणकुलमित्यादि। उक्तोऽपत्याधिकार:। णो वेत्त्यादौ यमादिभ्यस्त्व- पत्यवत्। स्यादन्तान्नोण: स्यात् वेत्त्यादिष्वर्थेषु यमादिभ्यस्तु अपत्यवत् त्या: स्यु:। वेत्त्यादि-

गोत्रराजादिभ्यो णकः कंस्तु धेनोरनञः। ष्यन्तादपत्यान्ताद्राजादेश्च सङ्घे णकः स्यात्। नञ् वर्जाद्धेनुशब्दात् तु कण्। दाक्षीणां सङ्घः दाक्षकं गार्गकं औपगवकम्। मूले राजकमिति राज्ञां समूहः इति वाक्यम्। राजराजन्यवत्साजा उरभ्रो हस्त इत्यपि। राजपुत्रा मनुष्योऽष्टौ चणोऽत्र दशकीर्त्तिताः। धेनूनां सङ्घः धैनूकं गोधेनुकम्। अनञ इति किम् आधैनवम् आधेनवमिति कश्चित्। अश्वादीयो वा। ष्यन्तादश्व-शब्दादीयः स्यात् वा सङ्घे। अश्वानां सङ्घः अश्वीयं पक्षे आश्वम्। पर्शोर्ड्वण्। ष्यन्तात् पर्शुशब्दात् ड्वण् स्यात् सङ्घे। पर्शूनां सङ्घः पार्श्वं डिति टिलोपः। अनु-दात्तादिखण्डिकादिभ्यां ट्नः। ष्यन्तादनुदात्तादेः खण्डिकादेश्च सङ्घे ट्नः स्यात्। कपोतानां सङ्घः कापोतं मायूरं तैत्तिरम् अनुदात्तादिः पूर्वाचार्य्यादिभ्यो ज्ञातव्यः। खण्डिकानां सङ्घः खण्डिकम्। खण्डिकावडवोलूक हलवल्कायुगंशुकाः। वरत्रा भिक्षुका निशा हरिद्रा च प्रकीर्त्तिताः। अत्र येऽचित्तास्तेभ्यः णिकः ये आद्युदात्ता-स्तेभ्यः ष्णो बाध्यते अहन्शब्दस्योभयत्र पाठात् णट्नौ स्यातां न णिकः। क्षुद्रक-मानवात् सेनाख्यायाम्। ष्यन्तात् क्षुद्रकमानवशब्दात् सङ्घेऽर्थे ट्नः स्यात्। सेना-संज्ञायां क्षुद्रकमानवशब्दो रूढौ क्षुद्रकस्यापत्यं राजा वा हस्तेत् कौशलाजाविति मानव्यः ष्विरूढात् लुक् क्षुद्रकाश्च मानवाश्च ते क्षुद्रकमानवास्तेषां सङ्घः क्षौद्रकमानवी सेना सेनाभिन्ने क्षौद्रकमानवकम्। यद्यपि अनुदात्तादित्वात् ट्नः सिध्यति तथापि योगविभागात् सामूहिके तदन्तविधिज्ञापनार्थं सेनाख्यायां नियमार्थश्चेदम् अतएव गोत्वेऽपि गोत्रान्तत्वात् सेना भिन्ने क्षौद्रकमानवकमिति गोत्रराजादिभ्यामिति कणः एवं बालहास्तिकमिति अचित्तवत्त्वात् णिकः। परे तु अनञ् सिद्धिरनु-दात्तादेः कोऽर्थः क्षुद्रकमानवात्। गोत्रात् वुञ् चेन्न तद्गोत्रं तदन्तान्न तु सर्वतः। ज्ञापकं स्यात् तदन्तत्वे तथाचापिशलेर्विधिः। सेनायां नियमार्थञ्च यथाबाध्येताञ्वुञा। वुञा णकेन अञ् ट्नौ बाध्यते। एतेन पूर्वविप्रतिषेधश्च णके णापित इति वृत्ति-कारः। अन्ये तु समूहाद्यर्थाजादितद्धितविषये लुकं निषिध्य क्षौद्रकमानव्यशब्दा-देव त्वसाङ्गः। पुरुषात् ष्णेयः। ष्यन्तात् पुरुषशब्दात् सङ्घेऽर्थे ष्णेयः स्यात्। पुरुषाणां सङ्घः पौरुषेयम्। पृष्ठब्राह्मणवाडवमानवाद्यः। ष्यन्तेभ्यः एभ्य सङ्घेऽर्थे यः स्यात्। पृष्ठानां सङ्घः पृष्ठ्यं ब्राह्मण्यं वाड़व्यं मानव्यम्। पृष्ठात् क्रतौ। ष्यन्तात् सौत्रार्थपृष्ठशब्दात् क्रतौ विषये सङ्घेऽर्थे यः स्यात्। पृष्ठ्यः षड़हो यागः। तथाच पृष्ठाद्दीनौ क्रताविति चान्द्रसूत्रम्। पाशादेः स्त्रियां ष्यन्तात् पाशाद्वे सङ्घेऽर्थे यः स्यात् स च स्त्रियां पाशानां सङ्घः पाश्या धूम्या। पाशधूमवनाङ्गारखलपोटगल

इलम्। वाती नड़: पीटगल: पिटग: खरगीरथा:। अङ्गारशब्दस्तोभयत्र पाठात् आङ्गारम् अङ्गार्या। चरणेभ्यो धर्मवत्। ष्णन्तेभ्यश्चरणवाचिभ्यो धर्मेऽर्थे येभ्यो ये त्या वक्तव्यास्तेभ्यस्त त्या: सङ्घेऽपि स्यु:। कठानां सङ्घ: काठकं कालापकं छान्दोग्यम् औकथिक्यं वाह्वृच्यम् आथर्वणमित्यादि। विषये देशे। सङ्घ: इति नानुवर्त्तते ष्णन्ताद्विषयेऽर्थे वेत्त्यादित्वात् ण:। यो विषय: स देशश्चेद्भवति अत्र विषयशब्देन ग्रामसमूहो गृह्यते। देशग्रहणात् न तु इन्द्रियग्राह्यरूपादि:। शिवानां विषयो देश: शैव: देश इति किं चक्षुषो विषयो रूपम्। राजन्यादेर्णक:। ष्णन्ताद्राजन्यादेर्णक: स्यात् विषये देशे णस्यापवाद:। राजन्यानां विषयो देश: राजन्यक: सान्नियक:। राजन्यसम्प्रियौ दाक्षिर्मानवौडुम्बरावपि। आर्जुनायनशालङ्का जलजालन्धरायणा:। शैलूषा त्रौड़वसतिचिगर्त्तावभ्रवस्तथा। ऊर्णनाभश्च वैकर्णो दैवपातस्तथैव च। आर्थकामेयाम्बरीषपुत्रौ रैणवनं तथा। विल्लवनं विराटश्च शेषं शिष्टप्रयोगत:। विधो भौरिक्यादे:। ष्णन्तात् भौरिक्यादे: विषये देशे विध: स्यात्। भौरिकीणां विषयो देश: भौरिकिविध: भौरिकिर्भौलिकिश्चोपयाता वियङ्गतस्तथा। शैवायतश्च कान्वेया भौरिक्यादौ षड़ीरिता:। चान्द्रायणादेर्भक्त:। ष्णन्ताच्चान्द्रायणादेर्विषये देशे भक्त: स्यात्। चान्द्रयणानां विषयो देश: चान्द्रायणभक्त:। चान्द्रायणो दासमित्रिर्वैषुका विषमखिण्ड च। तुण्ड खाड़ायनो दैवदासमित्रायणावपि। वैश्वाधनवसौरोरी तथा शायण्डिरित्यपि। शौद्रायणश्च स्नालस्रायनदाचायणावपि ताचायणश्च इत्येते पञ्चभिर्दश कीर्त्तिता:। ग्रन्थाद्व्याख्याने भववत्। ग्रन्थवाचिभ्यो येभ्यो ये त्या उक्ता भवेऽर्थे तेभ्य: ष्णन्तेभ्य: ते त्या व्याख्याने स्यु:। इष्टे व्याख्यानो ग्रन्थ: ऐष्टिक: पांशक:। एकाचस्तु सुपो व्याख्यान: सौप:। षात्वणात्विक: पाश्वहोतिक: आर्चिक: वैश्वामित्रक: राजसूयिक: पुरोडाशिक: आग्नेयणं छान्दस: ग्रन्थादिति किं पाटलिपुत्री सुकोशला पाटलिपुत्र सुकोशलयोर्व्याख्यायत इत्यर्थ:। व्याख्यायतेऽनेनेति व्याख्यान: घेऽनट्। भावे वर्णदृढ़ादिभ्य: णो वा। ष्णन्तेभ्यो वर्णविषयेभ्यो दृढ़ादिभ्यश्च भावे णो वा स्यात्। वर्णविशेष: शुक्लादि: शुक्लस्य भाव: शौक्लं कार्ष्ण्यं पक्षे शुक्लता शुक्लत्वं शुक्लिमा इत्यादि। दृढ़स्य भाव: दार्ढ्यम्। दृढ़ादिर्यथा। दृढ़वृढ़परिवृढ़भृशकृशश्रीतम्। विमतिर्यमलीवधिरविलातम्। पण्डिततरुणो मधुरो लवण: सम्मतिरज्ञो जड़सम्मानो। मूकोपेन्द्र विजात्युग्रमूर्खा: पाठविशारदौ। वक्रो दृढ़ादौ विबुधैरीरिता: षट् च विंशति:। पक्षे दृढ़ता दृढ़त्वं द्रढिमेत्यादि। ष्णन्तानां वर्णदृढ़ादीनां क्लीवत्वं स्वभावात् षित्वन्तु उत्तरार्थम्।

गुणवचनब्राह्मणादिभ्यः क्रियायाश्च । ष्यन्तेभ्यो ब्राह्मणादिभ्यश्च भावे क्रियायाञ्च ष्णाः स्यात् वा । मधुरस्य भावः क्रिया वा माधुर्य्यं जाड्यं कार्श्यं कार्पण्यम् । यद्यपि दृढादीनां गुणवचनत्वादनेन सिद्ध्यति तथापि पूर्वत्र पाठः पृथ्व्याद्यन्तर्गणत्वात् इमन्नर्थः । पुरुषोत्तमस्तु इमन्नर्थः कर्माणि ष्णो माभूदित्येतदर्थश्च पाठः इत्याह तन्मते जड़ब्रध्नशब्दौ दृढादौ न पाठ्यौ । ब्राह्मणस्य भावः क्रिया वा ब्राह्मण्यं मानव्यं ब्राह्मणमानवचपलसहायं गडुलो रुद्रानिपुणविषायम् । मित्रं तत्परदूत-विदग्धं परिषदिकपरमस्थविधर्म्मम् । सहितपुरोहितसारथितत्स्थं शिलिको धार्म्मिकसदृशं स्वस्थम् । पिशुनो बालिशकुशलसमन्थं विषमसमालसकविविष-मन्यम् । खण्डिकदण्डिकवाड़वचौरं वर्म्मिक शर्म्मिक सुकरसमग्रम् । सूचिकपूतिक-तरुमदीनं ग्रामिकरूपविशेषमुदासीनम् । आबाधयापबाधयविबाधयकापुरुषदुष्पुरु-षाश्च । उपबाधयविज्ञातौ प्रतिकूला तीक्ष्णदायादाः । सम्भाषी बहुभाषी संवेशी शीर्षविघातिसमाजौ । पूर्वापरोत्तराधरपुनः पुनरिति ह धर्म्माश्च । एकभावत्रिभावाल्प-भावकाञ्जलिका अपि । ज्येष्ठाभिरूपसंवादिपरस्परमनीश्वरः । एकानुकुशला रचा धूर्त्तो मध्यस्थ इत्यपि । अचेतज्ञानपूर्वञ्च प्रतिवेदविशन्ति च । पत्यन्ताश्च यथा कामद्विभावचतुरोचितम् । ब्राह्मणादिरिह प्रोक्तः परे शिष्टप्रयोगतः । ब्राह्मण-बालिशशब्दयोः पाठः ट्नबाधनार्थः । विषायविशस्योः तत्वबाधनार्थः नैताभ्यां तत्वमिति अन्येऽप्याहुः । चौरधूर्त्तयोर्मनोज्ञादिसमावेशार्थः कुशलादीनाञ्च स्वरादिगणसमा-वेशार्थः । आबाधयशब्दो जनपदवचनस्तस्मात् वृद्धे कौशलेत्यादिना ण्यङ् तथा उप-बाधयविबाधयापबाधयाश्च जनपदास्तेभ्यः ट्नः रूढ़ात् कम्बोजादेर्लुकनित्यमिति लक् ततो गोत्रचरणविहितं णकबाधनार्थं एवं मानववाड़वयोरपि अनीश्वरादिप्रभृतीनां नञादिति प्रतिषेधनार्थः । पत्यन्तात्तावत् आधिपत्यं गाणपत्यं प्राजापत्यम् । पत्यन्तपुरो-हितादिष्य इति सूचयन्ति तन्नादृतमस्माभिः स्वरस्य ह्यप्रयोगात् । वा स्त्रियां रुद्रादे-रर्हतस्तु नुण् च । ष्यन्ताद्रुद्रादेर्भावक्रिययोः ष्णः स्यात्तस्य च वा स्त्रीलिङ्गः अर्हतस्तु नुण् च । ब्राह्मणादित्वे सिद्धे लिङ्गव्यत्ययार्थं वचनम् । रुद्रस्य भावः क्रिया वा रौद्री रौद्रं षित्वादीपि ईपि ष्णस्य लोपः । रुद्रमित्रयथाकाम समग्रसचितन्तथा । चतुरस्यानुपूर्वश्च रुद्रादिः परिकीर्त्तितः । अर्हतो भावः क्रिया वा आर्हन्ती आर्हन्त्यं प्रशंसायां वन् । राज्ञस्तदन्तास्र । ष्यन्ताद्राजशब्दात् तदन्ताञ्च भावक्रिययोः ष्णः स्याद्ब्राह्मणादेरयं प्रपञ्चः । राज्ञो भावः क्रिया वा राज्यम् । भावकर्म्मणि नस्य लोपः अधि-राज्यं प्रादिसः । दूतवणिग्भ्यां यश्च । ष्यन्ताभ्यामाभ्यां भावक्रिययोः ष्णो यश्च वा

स्यात्। दूतस्य भावः क्रिया वा दौत्यं दूत्यं वाणिज्यं वणिज्यं पक्षे दूतत्वं वणिक्त्वं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्। दूत्या भावः क्रिया वा दौत्यं दूत्यं दूतत्वमिति तथा चागतप्रियकथैव दौत्यमिति भारविः। अन्ये वणिक्-शब्दस्य स्त्रीत्वमिच्छन्ति वाणिज्या वणिज्येति। दूतवणिग्भ्याञ्च वक्तव्यमिति न्यासकारः। सखिस्तेनाभ्यां नलोपश्च। योगविभागात् ण्यौ नानुवर्त्तते ष्यन्ताभ्यामाभ्यां भावक्रिययोर्यः स्याद्वा स्तेनस्य नलोपश्च। सख्युर्भावः क्रिया वा सख्यं स्तेनस्य भावः क्रिया वा स्तेयं पक्षे सखित्वं स्तेनत्वं परे तु ब्राह्मणादित्वात् स्तैन्यमिति वदन्ति। घुपूर्वेगन्तहायनान्तयुवादिभ्यः ण्यः। ष्यन्तात् घुपूर्वेगन्तात् हायनान्तात् युवादेश्च तयोः ण्यः स्याद्वा। मूले गौरवमिति घुपूर्वेगन्तत्वात् ण्यः एवं पाटवमिति। पक्षे गुरुता गुरुत्वमिति पटुता पटुत्वं घुपूर्वेति किं शचुता शचुत्वं द्विहायनस्य भावः क्रिया वा द्वैहायनं त्रैहायनं युवादेरावत् मूले यौवनम् अविकारणे न नलोपः। सार्स्यं वैरूप्यं सौभाग्यं सुभगादित्वात् द्वयोर्द्वयोर्वृद्धिः ब्राह्मणादित्वात् सिद्धं वाणिज्यमिति राजसदन्ताचेति ण्यः सौहृद्यमिति युवादित्वात्। युवचपलहपलखस्त्रीकुशलपिशुनयजमानसुहृदयानि। होता भ्राता दुःस्त्रीकुस्त्रीकुण्डकवर्णकनिपुणाश्च। सुब्रह्मचारिसुभ्रातृसुहृत् दुर्हृत् कुतूहलाः। चेलजश्वाशृशंसश्च दुर्हृदयः कमण्डलुः। दुर्भ्रातृस्थविरौ ज्ञेयौ परिव्राजक इत्यपि। अवणश्च युवादौ स्युरष्टाविंशतिरीरिताः। युवन्निति मनोज्ञादिसमावेशार्थं सुहृदयदुर्हृदयशब्दौ मित्रामित्रवाचकौ ब्राह्मणादिण्यासमावेशार्थौ। तेन सुहृदयस्य भावः क्रिया वा णे क्रते नित्यं हृदादेशः सुभगादित्वात् द्वयोर्द्वयोर्वृद्धिः सौहार्द्दं ण्ये तु हृदयस्य हृल्लास इत्यादिना वा हृदादेशः। सौहार्द्दं सौहृदय्यम् एवं दुर्हृदयस्य हृदादेशाभावपक्षे दौर्हृदय्यमिति वस्तुतस्तु हृदयपर्य्यायहृदच्छब्दस्य सौहार्द्दं सुहृदयदुर्हृदयशब्दयोस्तु सौहृदं सौहृदय्यं दौर्हृदं दौर्हृदय्यमिति। होतृस्थविरशब्दयोः ट्नसमावेशार्थः तेन सङ्घाद्यर्थेषु ट्न क्रते णः होत्रं णे क्रते वृद्धादीयः हौत्रीयम् एवं स्थाविरीयम्। हृत्पुरुषाभ्याञ्चासे। ष्यन्ताभ्यामाभ्यां तयोरसे णो वा स्यात्। हार्द्दं पौरुषम्। असे किं परमपुरुषत्वम्। श्रोत्रियस्येयस्य लोपश्च। श्रोत्रियस्य भावः क्रिया वा श्रौत्रं णे इयस्य लोपः। होत्रादिप्राणिजातिवयोभ्यः ट्नः। ष्यन्तात् होत्रादेः प्राणिजातेः वयोवचनाच्च भावक्रिययोः ट्नः स्याद्वा। होतुर्भावः क्रिया वा होत्रम्। होता भर्त्ता प्रशास्ता च उद्गातृमणकौ रथः। उन्नेता प्रतिहर्त्ता च अध्वर्युः सुष्टु दुष्टु च। होतृ उद्गातृ नवेष्ट अध्वर्युं दूत्येषां पाठः होत्रादिभ्यः य इति बाधनार्थः। प्राणिजातेस्तावत्।

यूनो भावः क्रिया वा यौवं रुरोः रौरवं वयोवचनात्तावत् कौमारं स्थाविरम्। कपिज्ञातिभ्यां ण्येयः। आभ्यां तयोः ण्येयः स्याद्वा। कपेर्भावः क्रिया वा कापेयं ज्ञातेयं पक्षे कपिता कपित्वं ज्ञातिता ज्ञातित्वं कपिशब्दस्य घूपूर्वगन्त्वात् ण्यो बाध्यते। मनोज्ञादेर्णकः। अन्तान्मनोज्ञादेस्तयोर्णकः स्याद्वा। मनोज्ञस्य भावः क्रिया वा मानोज्ञकम्। मनोज्ञकल्याणकुरूपपुत्रा युवा सहायः कुलपुत्रवृद्धाः। अमुष्यपुत्रः परपुत्रधूर्तौ मेधाव्यवश्यं बहुलश्च चौरः। आढ्यकुला-भिरूपेन्द्रछान्दसश्रोत्रिया अपि। विस्पोदरस्तथा ग्राम्यपुत्रामुष्यकुलावपि। ग्रामात् षण्ड कुमारी च परे च स्युः प्रयोगतः। सहायचौरधूर्त्तानां ब्राह्मणादिगणसमावेशार्थः तेन साहाय्यं साहायकमिति अमुष्यपुत्रामुष्यकुलशब्दयोर्णकान्तकुलपुत्रयोरिति ष्या न लुक् आमुष्य पुत्रिका आमुष्यकुलिका स्वभावात् स्त्रीत्वम् एवं यौवनिका इति कश्चित्। बहुलशब्दस्य फे मन्समावेशार्थः तेन बाहुलकं बाहुल्यं बंहिमा इत्यादि। युङ् रूपोत्तमादसुप्रख्यात्। य उङ् यस्य स युङ् उत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमाह उत्तमस्य समीपम् उपोत्तमं रु उपोत्तमं यस्य स रूपोत्तमः युङ् चासौ रूपोत्तमश्चेति स तस्मात् स्वन्तात् भावक्रिययोर्णकः स्यात् न तु सुप्रख्यात् रमणीयस्य भावः क्रिया वा रामणीयकं रमणीयकम्। युङ् इति। किं विमानता विमानत्वम्। रूपोत्तमादिति किं क्षत्रियत्वं क्षत्रियता। असुप्रख्यादिति किं सौप्रख्यं सुप्रख्यत्वं सुप्रख्यता। चात् स्त्रियाम्। अन्तात् कृतवसाद्भावक्रिययोर्णकः स्यात् स च स्त्रियाम्। गोपालपशुपालानां भावः क्रिया वा गोपालपशुपालिका। शौर्यीपाश्यायिका कौत्सकुशिकिका दैवासुरिका। गोत्रचरणाच्च श्लाघादौ। अन्ताद्गोत्रवाचिनश्चरणवाचिनश्च भावक्रिययोर्णकः स्यात् श्लाघादिविषये। स च स्त्रियाम्। या आख्या अपत्यनिमित्ता सा गोत्रपदवाच्या अथवा ये पठ्यन्ते ते गोत्रपदवाच्या इति या आख्या वेदाध्ययनप्रयुक्तान् पुरुषानाचष्टे सा चरणपदवाच्या। गार्गिकया काठिकया च श्लाघते अधिक्षिपति तामवगतवान् प्राप्तवान् वा गार्गत्वेन श्लाघते आत्मनि कत्थनं करोति अधिक्षिपति परान्निन्दति तामवगतवान् तच्छब्देन गोत्रचरणसम्बन्धिन्यौ भावक्रिये उच्यते ते ज्ञातवान् प्राप्तवान् लब्धवान् इत्यर्थः। एवं कठत्वेन श्लाघते इत्यर्थः। श्लाघादेरन्यत्र गार्गत्वम् काठत्वम्। ऋत्विग्भ्य ईयः। अन्तेभ्यः ऋत्विग्विशेषवाचिभ्यो भावक्रिययोरीयः स्यात्। मैत्रावरुणीयः प्रस्तोत्रीयः। मित्रावरुणप्रस्तोतृब्राह्मणाच्छंसि पोतृ च। ग्रावस्तुतार्द्धभावी च प्रतिप्रस्तोतृहोतृ च। छायाग्रेष्टा सन्नम्ब्रह्मणोऽच्छावागऽग्नीध्रमेव

च। अध्वर्युः प्रतिहर्त्ता च ब्रह्मोद्गाता च कीर्त्तितः। एते पञ्चदशशब्दा ऋत्विग्विशेषवाचिन इति कात्यायनः। ऋत्विगर्थाद् ब्रह्मणस्त्वः। ध्यन्तादृत्विग्वाचिनो ब्रह्मशब्दाद्भावक्रिययोस्त्वः स्यात् ब्रह्मणो भावः क्रिया वा ब्रह्मणो भावः क्रिया वा ब्रह्मत्वं नेति वक्तव्ये त्ववचनात्तबाधनार्थम्। आह्मणार्थात् तु ब्रह्मत्वं ब्रह्मता। न नञो यादचतुरादेः। नञपूर्वात् भूतात् भावे क्रियायाञ्च उक्तास्त्या न स्युः न चतुरादेः। न शुक्लः अशुक्लस्तस्य भावः क्रिया वा अशुक्लत्वम् अशुक्लता अदृढ़त्वम् अदृढ़ता अमधुरत्वम् अमधुरता अब्राह्मणत्वम् अब्राह्मणतेत्यादि यादिति किं नास्ति पटुर्यस्यापटुस्तस्य भावः अपाटवम्। अचतुरादेरिति किम् अचातुर्य्यम् अचतुरत्वम् अचतुरता न चतुरोऽचतुरस्तस्य भावः क्रिया वेति वाच्ये एवं आसङ्गत्यं आनरथ्यं आवस्त्रं आरूप्यं आबुध्यं आवश्यं आलस्यम्। धान्यवाचिनस्तत्क्षेत्रे णीनः। ध्यन्तेभ्यो धान्यवाचिभ्यो णीनः स्यात् तत्क्षेत्रे वाच्ये। मुद्गानां भवनं क्षेत्रं मौद्गीनं कौलत्थीनं कौद्रवीणं धान्यीनमिति भागवृत्तिः। शालिव्रीहिभ्यां णेयः। ध्यन्ताभ्यामाभ्यां क्षेत्रे वाच्ये णेयः स्यात् णीनस्यापवादः। शालीनां भवनं क्षेत्रं शालेयं व्रैहेयं क्षेत्रं स्त्रियां शालेयी भूः। यव यवक षष्टिकाभ्यो वा तु तिल भङ्गा माषाऽणुमाभ्यः। ध्यन्तेभ्य एभ्यस्तत्क्षेत्रे यः स्यात् तिलादेस्तु वा। यवानां भवनं क्षेत्रं यव्यं यवक्यं यष्टिक्यम्। यवकशब्दो वोरोधान्ये रूढ़ः तिलादेस्तु तिल्यं भङ्ग्यं माष्यं आणव्यम् उम्यं पक्षे तैलीनमित्यादि। भङ्गाशब्दः कार्पासे वर्त्तते इति धातुप्रदीपः। रक्षितस्तु भङ्गासमाख्यशस्येऽपीति विश्व इति। अश्वादेकाहगमे णीनः। एकाहेन गम्यते एकाहगमः तस्मिन् वाच्ये अश्वशब्दाण्णीनः स्यात्। अश्वस्य एकाहगमः पन्थाः आश्वीनः पन्थाः। इदमर्थे। ध्यन्तादिदमर्थे वेत्त्यादित्वात् णः स्यात् मूले विष्णोरिदमिति वाक्यं भवादित्वात् ब्रह्मादीयः एवं त्वदीयं गार्गीयं नादेयं राष्ट्रीयमित्यादि। माधवनमिति मघोन इदमिति वाक्यं तेन उः अविकारणे न नलोपः तुङ्पदे माधवतमिति शौवनमिति शुन इदमिति वाक्यं हारादित्वात् वस्तीम् पूर्ववन्न नलोपः। यमादेस्तु याम्यं प्राजापत्यं पाशुपतं आग्नेयं कालेयम् औत्समित्यादि अत्र लिङ्गवचनमतन्त्रं तेन विष्णोरियं वैष्णवी विष्णोरिमौ वैष्णवावित्यादि। इदमिति सम्बन्धमात्रं विवक्षितं तथाच शैवं शिवसम्बन्धीत्यर्थः। रथरथान्तात् यो रथाङ्गे। ध्यन्तात् रथात् रथान्ताच्च इदमर्थे रथाङ्गे वाच्ये यः स्यात् णस्यापवादः। रथस्येदं रथ्यं चक्रं परमरथ्यं चक्रं रथाङ्गम् इति किं रथस्येदं स्थानमिति। वाहनवाहनादिपरिषदध्वर्य्युभ्यः ट्नः। वाहनवाचकात्

वाहनवाचिपूर्वशब्दात् परिषच्छब्दादध्वर्य्युशब्दाच इदमर्थे ञः स्यात्। हस्तिन इदं हास्तं आर्वतं आश्वम्। वाहनपूर्वात् हस्तिनचर्म्म हस्तिचर्म्म तस्येदं हास्तिचर्म्मं आश्वशकटम्। पारिषदं आध्वर्य्यवम्। जयादित्यस्तु वाहनाद्याच एवार्थे वाहनपूर्वरथशब्दाच त्यमुक्त्वा अश्वस्येदं वहनीयं आश्वं यानं अश्वरथस्येदम् आश्वरथमित्याह तद्भाष्यादिविरुद्धमिति। हलसीराभ्यां ठिकः। हलस्येदं हालिकं सैरिकम्। अपत्यात्वकौ शिष्यदण्डमानवयोः। यन्तादपत्यान्तादिदमर्थे वकः स्यात् न तु शिष्ये दण्डमानवे च। ग्लुचुकायनेरिदं ग्लौचुकायनकं औपगवकम्। अशिष्यदण्डमानवयोरिति किं दाक्षेरयमन्तेवासी दाक्षः गौकक्षदण्डमानवः दण्डप्रधानो मानवः शाकपार्थिवादित्वाल्लोपः। चरणाद्धर्म्माम्नाययोः। यन्ताच्चरणवाचिन इदमर्थे धर्म्माम्नाययोर्वाच्ययोर्णकः स्यात्। कठस्यायं धर्म्मः आम्नायो वा काठकः कालापकः चरणा वेदनिमित्तेन पुरुषे वर्त्तमानाः कठादयश्चरणवाचकाः आम्नायः पाठपरम्परा। नटोक्थिकबह्वृचच्छन्दोगयाज्ञिकाञ्ञ्यः। यन्तेभ्य एभ्य इदमर्थे धर्म्माम्नाययोर्वाच्ययोर्ञ्यः स्यात्। नटस्यायं धर्म्म आम्नायो वा नाट्यः औक्थिक्यः बाह्वृच्यः छान्दोग्यः याज्ञिक्यः। औक्थिकः सामव्याख्यानाऽध्येता बह्वृचः ऋग्वेदी छन्दोगः सामवेदी याज्ञिको यज्ञविद्याध्येता। चाददेवासुरादेरको वैरविवाहयोः। यन्ताद्देवासुरादिभिन्नात् कृतद्वन्द्वादिदमर्थे वैरविवाहयोर्वाच्ययोरकः स्यात्। वैरं विरोधः काकश्च उलूकश्च तयोरिदं वैरं काकोलूकिका अश्वमहिषिका। अत्रयश्च भरद्वाजश्च तेषां विवाहः अत्रिभरद्वाजिका कुत्सकुशिकिका गर्गयस्केत्यादिना यञोऽपत्यत्यस्य लुक् स्वभावादस्य स्त्रीत्वम्। देवासुरादेस्तु दैवासुरं रक्षोगन्धर्वं यचौश्वीरमित्यादि देवासुरादेर्वैरस् एवं निषेध इत्येके। अग्नीधो रण् गेहे नदश्च यन्तादग्नीधशब्दादिदमर्थे रण् स्यात् गेहे वाच्ये तस्मिन् पूर्वं दसंज्ञं न स्यात्। अग्नीध इदं गृहम् आग्नीध्रम् अग्निमिन्धे इत्यग्नीध् होता अन्तर्भावितण्यन्तादिन्धेः क्विप्। समिध आधाने षाण्ण एनम् च। समिध् शब्दादाधाने वाच्ये इदमर्थे षाण्णः स्यात् षाण्णस्य एनम् च, स न स्यात्। समिध इदमाधानं सामिधेन्यो मन्त्रः सामिधेनी ऋक् ईपि षाण्णस्य लोपः। रैवतिकादेरीयः। यन्ताद्रैवतिकादेरिदमर्थे ईयः स्यात्। रैवतिकस्येदं रैवतिकीयं वैजवापीयम्। रैवतिको वैजवापिः गौरग्रीवौदमेघि च। औदवापि च स्वापिषिः सप्त कीर्त्तिताः। सर्वेभ्योऽपत्यान्तत्वात् यको बाधने। क्षालिपादकौपिञ्जलात् षाः। यन्ताभ्यामाभ्यामिदमर्थे षाः स्यात्। क्षालिपादस्येदं क्षालिपादं कौपिञ्जलस्येदं कौपिञ्जलम्।

## ४३४। ऋद्रो ये।

ऋत् ।१।, रः १।, ये ७।

पित्र्यम्।

## ४३५। हन्षन् धृतराज्ञामुङ्लोपः णे।

हन्-षन्-धृतराज्ञां ६॥, उङ्लोपः १।, णे ७।

वार्त्रघ्नं पौष्णं धार्त्तराज्ञम्। एषां किं सामनम्।

---

अपत्यत्यान्ताभ्यां णकौ बाध्यते। आथर्वणिकादथर्वणश्च। ष्यन्तादाथर्वणिकादिदमर्थे णः स्यात् णे अथर्वणादेशश्च। अथर्वणा प्रोक्तम् आथर्वणं तदधीते तद्वेत्ति वा आथर्वणिकः पाठबलात् अध्येतृवेदित्रोर्न लुक् आथर्वणिकस्यायं धर्म्म आम्नायो वा आथर्वणः धर्म्माम्नाययोरेवाभिधानात् आथर्वणिकं गृहमित्यादौ न स्यात्। वोढुर्वहित्रश्च। ष्यन्ताद्वोढृशब्दादिदमर्थे णः स्यात् तस्मिन् वहित्रादेशश्च। वोढुरिदं वाहित्रं संपूर्वादपि सांवाहित्रम्। णिण्यट्रात् सङ्घाङ्कघोषलक्षणे। ष्यन्तेभ्यः ण्यन्तण्यान्तट्रान्तेभ्य इदमर्थे सङ्घादिषु वाच्येषु णः स्यात्। दाक्षेः सङ्घोऽङ्को घोषो लक्षणं वा दाक्षः प्लाक्षः ण्यान्तात् गार्ग्यः वात्स्यः ट्रान्तात् वैदः औत्स इत्यादि एभ्योऽपत्यत्यान्तेभ्यो णकौ बाध्यते गोवलीवर्दवदिहाङ्कलक्षणयोर्भेदः। शाकलाण्णकश्च। ष्यन्ताच्छाकलशब्दादिदमर्थे सङ्घादिषु वाच्येषु णकः स्यात् णस्यापवादः। शाकलेन प्रोक्तमधीते शाकलः तस्य सङ्घोऽङ्को घोषो लक्षणं वा शाकलकः चकारात् णश्च शाकलः। नानन्तरादिषु। ष्यन्तादिदमर्थेऽनन्तरादिषु वाच्येषु इदमर्थे विहितास्त्या न स्युः। समुद्रस्येदम् अनन्तरं दूरं समीपमुपर्य्यधो वा इत्यादि॥ ४३३॥

ऋकारो रः स्यात्तद्धितये। पितुरिदं पित्र्यम् अणित् ण्यः। ये किं णित् कणि पैतृकम्॥ ४३४॥

श्रीरा-टी—ऋत् लुप्तषीकं दम्। पित्र्यमिति पितुरिदमिति वाक्यम् अत्र ये रेफविधानात् य एव॥ ४३४॥

हन् च षन् च धृतराजन् च ते तेषां उङो लोपः। षन्निति मूर्द्धन्यषादि नकारोङ् दन्त्यनान्तो भागः तस्य केवलस्य असम्भवात् उक्षन् पूषन् प्रभृतीनां ग्रहणम्। अभिकन्तु प्रविष्टं न तु तद्धानिरिति न्यायात् सदानोऽल्लोप इत्यनेनैवाल्लोपे

## ४३६। युष्मदस्मदोर्त्वन्मदां युष्माकास्माकतवकममकाः ष्णीने।

युष्मद्-मदां ६॥, युष्माक-ममकाः १॥, ष्णीने ७।।

यौष्माकं यौष्माकीणं, आस्माकम् आस्माकीनं, तावकं तावकीनं, मामकं मामकीनम्। सूर्य्याय हितं सौरीयम् आगस्तीयम् आत्मनीनम्। चौर एव चौरः त्रैलोक्यं रामकः।

---

सिद्धे इदं नियमार्थं तेन ष्णे परे एषामेव उङ्‌लोपः स्यान्नान्यस्य इत्यर्थः। हवन्न इदं वार्व्रघ्नम् अत ष्णे परे वृद्धौ अनेन अल्लोपे हनोऽघ्नः एवं पूष्णः पौष्णं धृतराज्ञः धार्त्तराज्ञम् उभयत्र ष्णे वृद्धौ उङ्‌लोपः। उक्षास्तु अपत्यार्थे ष्णे औक्ष्ण इति पूर्वमुदाहृतम् इदमर्थे ष्णे तु मनवव‍र्ज्ज्येत्यनेन अपत्यार्थभिन्ने ष्णे नकारलोपादुङ्‌लोपाभावे औक्षं चर्म्म। एषां किं साम्न इदं सामनं अत ष्णे पूर्वेणापि उङ्‌लोपो न स्यात् ॥ ४३५ ॥

श्रीरा-टी—हंश्च पूषंश्च धृतराजंश्च ते तेषां उङो लोपः उङ्‌लोपः। हनन्त षन्नन्त धृतराजन् इत्येषां ष्णे परे उङो लोपः स्यात्। वार्व्रघ्नम् इति हवन्न इदमित्यर्थे ष्णः अनेन उङो लोपे हनोऽघ्न इति घ्नः। पौष्णमिति पूष्ण इदं ष्णे उङो लोपे षत्वञ्च एवमौक्ष्णम्। धार्त्तराज्ञमिति धृतो राजा येन धृतराजा तस्येदं ष्णे उङो लोपे चुत्वं सर्व्वत्राविकार्ष्णे नलोपाभावः। सदानोऽल्लोप इत्यनेन उङो लोपे प्राप्ते नियमार्थं वचनं तेन साम्न इदं सामनमित्यादौ न स्यात् ॥ ४३५ ॥

युष्मद् अस्मद् त्वद् मद् एषां स्थाने क्रमात् युष्माक अस्माक तवक ममक एते आदेशाः स्युः ष्णे ष्णीने च परे। युष्माकमिदमित्यर्थे ष्णे ष्णीने च विभक्तेर्लुकि युष्मद् स्थाने युष्माकादेशे वृद्धौ यौष्माकं यौष्माकीणम् एवम् आस्माकम् आस्माकीनमिति एवं तव इदम् इत्यर्थे ष्णे ष्णीने च तेर्लुकि युष्मद एकत्वात् त्वदादेशे तस्य च तवकादेशे वृद्धौ तावकं तावकीनम् एवं मामकं मामकीनमिति। सूर्य्याय हितं सौरीयम् अत ष्णीये वृद्धौ सूर्य्यागस्त्यस्येति यलोपः। एवम् आगस्तीयम् आत्मने हितं आत्मनीनम् अत ष्णीने अध्वात्मनोरीने इति नलोपनिषेधः। स्वार्थमुदाहरति। चौर एव चौरः अत ष्णे वृद्धिः त्रिलोकी एव त्रैलोक्यम् अत्र ष्णे वृद्धौ यणोर्लोप इत्यकारलोपः।

स्वार्थप्रत्ययान्तास्तल्लिङ्गा एव इति नियमेऽपि अस्य क्लीवत्वमभिधानात् । राम एव रामकः अत्र कण् । कण्प्रत्ययस्य स्वार्थादतिरिक्तोऽप्यर्थः यथा अज्ञाने कुत्सिते चैव संज्ञायामनुकम्पने । तद्युक्तनीतावप्यल्पे वाच्ये ह्रस्वे च कः स्मृत इति प्राञ्चः । यथा अश्वकः कस्यायमश्वः कुत्सितो वा इत्यर्थः । इत्यादौ कणोऽखित्वान्न वृद्धिः । विप्रकः कुत्सितो विप्र इत्यर्थः । संज्ञायां देवदत्तकः यज्ञदत्तकः अनुकम्पायां वत्सकः दुर्बलकः बुभुक्षितकः पुत्रकः अनुकम्पायुक्तनीतौ आयुर्वित्तं गृहच्छिद्रं यत्नात् कुर्वीत गुप्तकम् । अल्पे तैलकं ह्रस्वे वृक्षकम् ॥ ४३६ ॥

श्रीरा-टी—युष्मच्च अस्मच्च त्वच्च मच्च ते तेषां युष्माकश्च अस्माकश्च तवकश्च ममकश्च ते । खञ्च खीनश्च तत्तस्मिन् । एषामिते क्रमात् स्युः खखीनयोः मरयोः । यौष्माकमित्यादि युवयोर्युष्माकमित्यर्थे युष्मदो युष्माकादेशः खखीनयोः । यौष्माकीणमित्यत्र खत्वम् एवमास्माकमिति आस्माकीनमिति आवयोरस्माकं वा इदमिति वाक्यम् । तावकमित्यादि तवेदमिति वाक्यम् । खखीनयोरिति किं युष्मदीयम् अस्मदीयं त्वदीयं मदीयं पक्षे हृद्यादीयः । च्या ईयो हितेऽराजादेः । च्यन्ताद्धितेऽर्थे ईयः स्यात् न तु राजादेः । मूले सूर्य्याय हितमिति सूर्य्यस्यायं धर्मः सौर्य्यः तस्मै हितमित्यर्थे ईये कृते सूर्य्यागस्त्यस्येति यलोपः । एवमागस्तीयमिति एवं सूर्य्याय हितं सूरीयम् एवमागस्तीयं वत्सीयमित्यादि । राजादेस्तु राज्ञे हितम् । राजा ब्राह्मण आचार्य्यो वृषलोऽन्ये प्रयोगतः । यद्यपि च्यन्तस्य ष्यन्तभिन्नत्वं तथापि ष्यर्थविहितायाश्चयाः कत्वाभावात् पूर्वत्र नोदाहृत्य इहोदाहृतम् । च्या इत्यधिकारः प्राः प्राक् । सर्वाखश्च । च्यन्तात् सर्वशब्दात् हितेऽर्थे ईयो नश्च स्यात् । सर्वेभ्यो हितं सर्वीयः सार्वः स्त्रियां सर्वीया सार्वी । प्राण्यङ्गतदन्तब्रह्मादेयः । च्यन्तात् प्राण्यङ्गवाचकात् प्राण्यङ्गवाचकान्तात् ब्रह्मादेश्च हितेऽर्थे यः स्यात् ईयस्यापवादः । दन्तेभ्यो हितं दन्त्यम् ओष्ठ्यं राजदन्त्यं राजौष्ठ्यं शीर्षण्याः केश्याः ब्रह्मणे हितं ब्रह्मण्यम् अभावकर्म्मये न नलोपः । ब्रह्मातिलवणौ माषरथौ खलवृषे इति शिरसे हितं शीर्षण्यम् । अव्यजाभ्यां थ्यः । च्यन्ताभ्यामाभ्यां हितेऽर्थे थ्यः स्यात् । अवये हिता अविथ्या शाला अजाय हिता अजथ्या भूमिः प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात् अजायै हिता अजथ्या इत्यपि च । आत्मभोगोत्तरदाभ्यामीनः । च्यन्तादात्मन्शब्दात् भोगोत्तरदाच्च हितेऽर्थे ईनः स्यात् । मूले आत्मनीनमिति आत्मने हितमिति वाक्यम् अध्वात्मनोरीन इति न नलोपः । भोगशब्दः शरीरवाची राज्ञो भोगः राजभोगः तस्मै हितं राजभोगीनं मातृभोगीनं

क्षुभ्नादित्वान्नणः। चरकमानवाभ्यां खञ्। चन्ताभ्यामाभ्यां हितेऽर्थे ईनो खित् स्यात्। चरकाय हितं चारकीणं मानवीनम्। विश्वजनादीनः। चन्तात् विश्वजनादेर्हितेऽर्थे ईनः स्यात् यसे सति। विश्वजनाय हितं विश्वजनीनं य इति किं विश्वे जना यस्य तस्मै हितं विश्वजनीयम्। भाष्ये तु सामानाधिकरण्यमात्रेऽभिधानं सम्मते विश्वस्य जनो विश्वजनस्तस्मै हितं विश्वजनीयं सर्वजनीयमिति प्रत्युदाहरणं पूर्वत्र विश्वजनीनमिति। सर्वजनमहाजनाभ्यां णिकः। चन्ताभ्यामाभ्यां हितेऽर्थे णिकः स्यात् यसे सति। सर्वजनाय हितं सार्वजनिकः विश्वजनादिपाठाच्च सर्वजनीन इति पूर्वेण महाजनिकः। य इति किं सर्वेषां जनः तस्मै हितं सर्वजनीयं महान् जनो यस्य तस्मै हितं महाजनीयमिति। पुरुषात् णेयस्तद्वधतत्कृतयोः। चन्तात् पुरुषशब्दात् हितेऽर्थे तद्वधे तत्कृते च वाच्ये णेयः स्यात्। पुरुषाय हितं पौरुषेयो वधः पुरुषकारश्च। कंसपरशुभ्यां लुक् विकारार्थे। आभ्यां हितार्थे लुक् स्यात् विकारार्थे त्ये परे। कंसीयस्य विकारः कांसं परशव्यस्य विकारः पारशवम्। परशोर्हितादौ यो वक्ष्यते। ईयो विकारादुपादानकारणे तादर्थ्ये। प्रकृतेरवस्थान्तरं विकारः तदर्थात् उपादानकारणे वाच्ये तादर्थ्ये गम्यमाने ईयः स्यात्। अङ्गारेभ्यः एतानि काष्ठानि अङ्गारीयाणि काष्ठानि अङ्गारशब्दो विकारार्थस्तस्योपदानं काष्ठं तस्य तादर्थ्यं गम्यते। एवं प्राकारीया इष्टका इत्यादि। तादर्थ्ये इति किं धान्यानां यवाः विकारादिति किम् उदकाय कूपः। छदिर्बलिभ्यां णेयः। चन्ताभ्यामाभ्यां विकारार्थाभ्यामुपादानकारणे वाच्ये तादर्थ्ये गम्यमाने णेयः स्यात्। छदिषे तृणानि छादिषेयाणि तृणानि बालेयास्तण्डुलाः। ऋषभोपानद्भ्यां ण्यः। चन्ताभ्यामाभ्यां विकारवाचकाभ्याम् उपादानकारणे वाच्ये तादर्थ्ये गम्यमाने ण्यः स्यात् ऋषभाय वत्स आर्षभ्यो वत्स औपानह्यं काष्ठम्। चर्मणि ट्रोऽनुपानहः। चन्तादुपानच्छब्दभिन्नात् विकारार्थादुपादानकारणे चर्मणि वाच्ये तादर्थ्ये गम्यमाने ट्रः स्यात्। वरत्रायै चर्म वारत्रं चर्म व्याघ्रं चर्म। अनुपानह इति किम् औपानह्यं चर्म। ब्रह्माद्यादेरित्यतः सर्वत्र तदन्तविधिरिष्यत इति न्यासकारस्तेन परमब्रह्मण्यं परमादित्यः परमाजव्यः परमात्मनीनः परमविश्वजनीयः पारममहाजनिकः पारमचरकीणः परमाङ्गारीयं काष्ठं परमवरत्रायै चर्म पारमवरत्रं चर्मेत्यादि। विकारार्थादुपादानकरणे ये त्या उक्तास्ते हितार्थे भवन्तीत्यन्ये तेषाम्मतेऽङ्गाराय हितम् अङ्गारीयं छादिषेयमित्यादि। हितादावु गवादेर्योऽपूपादिहविर्वाचिभ्यस्तु वा। चन्तादुवर्णान्ताद्गवादेश्च हितादावर्थे यः

स्यात् अपूपादेर्हविर्वाचिभ्यस्तु वा। धेनवे हितं धेनव्यं बध्वै हितं बधव्यं शलङ्कुश्चर्म्मविकारार्थः तस्मात् ट्रं बाधित्वाऽनेन यः शलङ्कवे चर्म्म शलङ्कव्यं चर्म्म। गवादेस्तावत् गवे हितं गव्यं हविष्यम्। गोहविर्युगमेधाविविखदसादक्लपस्तु चाः। इहैकादशकं प्रीत्तामचरं वहिरष्टका। अपूपादेस्तावत् अपूपाय हितम् अपूप्यम् अपूपीयं पृथुक्यं पृथुकीयम्। अपूपः पृथुकोऽभ्यूषी धूमार्घोऽपीक्षुणा सह। स्थूनाकटकक्लिन्नानि प्रदीपी दीपतण्डुलौ। अश्वपादाऽथ सर्वेऽन्नविकारा इह कीर्त्तिताः। सर्वेऽन्ने विकारवाचका अपूपादयः यथा पिष्टाय हितं पिष्ट्यं पिष्टीयं शक्तुशब्दादुवर्णान्तत्वात् पूर्वेण नित्यम्। शक्तव्यम्। हविर्वाचिनस्तावत् आमिक्षायै हितं आमिक्षीयं पुरोडाशेभ्यस्तण्डुलाः पुरोडाश्याः पुरोडाशीयाः तण्डुलाः। चरुशब्दादुवर्णान्तत्वात् हविःशब्दात् गवादित्वात् पूर्वेण नित्यं चरव्यं हविष्यमिति। ऊधसो नङ् च। यन्तादुधःशब्दाद् यः स्यात् हितादौ तस्मिन् नङ् च अङावितौ। ऊधसे हितम् ऊधन्यम्। शुनः शुनशूनौ च। यन्तात् श्वन्शब्दात् हितादौ यः स्यात् तस्मिन् शुनशूनौ इत्येतौ स्याताम्। शुने हितं शुन्यं शून्यम्। नाम्नि कम्बलात्। यन्तात् कम्बलशब्दात् हितादौ यः स्यात् नाम्नि गम्यमाने। कम्बलाय हितम् उपादानकारणं वा कम्बल्यं ऊर्णा पलशतम्। नाम्नीति किं कम्बलीया ऊर्णा। अप्राण्यङ्गे नाभेर्नभश्च। यन्तान्नाभिशब्दात् हितादौ यः स्यात् अप्राण्यङ्गे तस्मिन्नाभेर्नभादेशः। रथैकदेशो नाभिः नाभये हितम् उपादानकारणं वा नभ्यं काष्ठम्। अप्राण्यङ्ग इति किं नाभये हितं नाभ्यं तैलं प्राण्यङ्गवाचित्वाद् यः पूर्वेणैव। गवादितः सर्वत्र तदन्तविधिरिति जयादित्यः। तेन परमगव्यं यवापूप्यं यवापूपीयं परमामिक्ष्यं परमामिक्षीयं परमौधन्यं परमशून्यं परमनभ्यं इत्यादि। हितादिरिह हितं तादर्थ्ये उपादानकारणम् उपादानकारणं चर्म्म इति। सन्तापादेः णिकः प्रभवति। यन्तात् सन्तापादेः प्रभवत्यर्थे णिकः स्यात्। सन्तापाय प्रभवति सन्तापिकः। सन्तापमांसप्रवेशशत्रुसङ्घातसौदनः। उपवासप्रवासोपसर्गसम्पादनन्तथा। मांसौदनञ्च सन्नाहः संयोगश्च प्रकीर्त्तितः। पारायण्यामाषयास्तु समौ निषेय इत्यपि। निसर्गश्च विसर्गश्च धीरैरेकोनविंशतिः। योगाद्यश्च। योगाय प्रभवति योग्यः यौगिकश्च। कर्म्मणो णुकः। यन्तात् कर्म्मशब्दात् प्रभवत्यर्थे णुकः स्यात् ण इत्। कर्म्मणे प्रभवति कार्म्मुकं धनुः। अतिथेर्ण्यस्तादर्थ्येऽपित्र्यदेवतान्तपादार्घेभ्यः। यन्तादतिथेर्ण्यः स्यात् तादर्थ्ये देवतान्तादेस्त्विन्। अतिथये जलम् आतिथ्यम् अतिथ्यर्थमित्यर्थः। पितृदेवतायै इदं पितृ-

दैवत्यम् अग्निदैवत्यम् पादाय इदं पाद्यम् अर्घाय इदम् अर्घ्यम्। प्रज्ञाः। प्रज्ञा इत्यधिक्रियते चातुरर्थिकात् प्राक्। ण: प्रज्ञादे: स्वार्थे वा। प्रज्ञान्तात् प्रज्ञादे: स्वार्थे ण: स्याद्वा। प्रजानातीति प्रज्ञ: प्रज्ञ एव प्राज्ञ: पक्षे प्रज्ञ: मूले चौर एवेति। प्रज्ञ चौर वणिक् विद्या देवता वसुबन्धव:। उष्णिक् साधारणकुत्र पिशाचासुरशत्रव:। सत्वदाश्रयणाऽग्नीध्रवयो वचोमलौहित:। मरुत् प्रत्यक्ष चक्षूंषि विपति व्याहृती विदन्। चिकीर्षद् योध जुह्वन्तचण्डाल विस्वरीऽपि च। अग्रहायण इत्येते त्रिंशत्त्वद्रधिका इह। साधारणशब्दोऽनत्यान्त: स्त्रियां साधारणैव साधारणी। सत्वच्छन्दोऽसधो: शत सत् तस्मात् वतु: सत्वन् स एव सात्वत: विददिति शत्रन्त: कृष्णमृगार्थ: जुह्वदिति शत्रन्त: कृष्णमृगार्थ: जुह्वन्नेव जौह्वत: कृष्णमृग:। आकृतिगणोऽयम्। छन्दोभ्य:। प्रज्ञान्तेभ्य:। छन्दोवाचिभ्य: स्वार्थे ण: स्याद्वा। त्रिष्टुवेव त्रैष्टुभं जागतं गायत्रं स्वभावात् क्लीवत्वं पक्षे त्रिष्टुबित्यादि। सन्देशवाग्युक्तात् कर्म्मण:। प्रज्ञान्तात् सन्देशवाचा युक्तेऽर्थे वर्त्तमानात् कर्म्मशब्दात् स्वार्थे ण: स्याद्वा। कर्म्मैव कार्म्मण: यद्वाचिकं श्रुत्वा वशीकरणादिकर्म्मानुष्ठीयते तदेवोच्यते। कृष्णविसारिभ्यां मृगमत्स्ययो:। प्रज्ञान्ताभ्यामाभ्यां क्रमादनयोर्वर्त्तमानाभ्यां णो वा स्यात्। कृष्ण एव कार्ष्णो मृग: विसार्य्येव वैसारिणो मत्स्य: इनोऽकलापादेरिति न नलोप: पक्षे कृष्ण: विसारी श्रोत्रौषधिभ्यां शरीराजात्यो:। प्रज्ञान्ताभ्यामाभ्याम् अनयो: क्रमाद्वर्त्तमानभ्यां स्वार्थे णो वा स्यात्। श्रोत्रमेव श्रौत्रं शरीरं मणिवन्धवाचके तु न भवति औषधिरेवौषधम् औषधिभिरवकन्दादिजातौ तु औषधि: फलपाकान्ता जाति:। विनयादे: ष्णिक: उपायस्य ह्रस्व। प्रज्ञान्ताद्विनयादे: स्वार्थे ष्णिक: स्याद्वा उपायशब्दस्य ष्णिके ह्रस्व। विनय एव वैनयिक: विनयव्यवहारोपचाराऽत्यन्ताऽनुगामिन:। सम्प्रदाय समुत्कर्ष विशेष विपयात्यया:। समाहारसमूहौ चाकस्मात् समयसङ्गति:। व्यासादेशौ च सम्प्रोक्ता: सप्तभिर्दश कोविदै:। अकस्मादेव आकस्मिक: टेर्लोप:। व्यास एव वैयासिक: तेन निर्वृत्ता वैयासिकी संहिता इति आदिश्यतेऽसौ आदेश: आदेश एव आदेशिक:। उपाय एव औपयिकं ष्णिके ह्रस्व:। अस्याकृतिगणत्वात् चातुरर्थिक इत्यादि। वाच: सन्देशे। प्रज्ञान्तात् सन्देशे वर्त्तमानात् वाच्शब्दात् स्वार्थे ष्णिक: स्यात् ष्णिकं विनैव शब्दवृत्त्यभावात् विकल्पप्रकरणे नित्योऽयं विधि:। वाचिकं सन्देश:। सन्देश इति किं वागस्य मधुरा। चतुर्वर्णादे: ष्यञ:। प्रज्ञान्ताच्चतुर्वर्णादे: स्वार्थे ष्यञ: स्याद्वा चतुर्वर्णा एव चातुर्वर्ण्यं चतुर्वर्णसुखाऽनन्तचतुराश्रमषड्गुणा:। त्रिलोको सर्व्वदेवस्य सेना भेषजसन्निधि:। त्रिकालावसथौ चैव समीप-

मणिकोपमा:। त्रिषष्टिरितिह प्रोक्ताः कोविदैर्दंशसप्ततिः। मूले त्रैलोक्यमिति इतिह एव ऐतिह्यम्। यावादिः कः। प्रान्ताद् यावादेः कः स्याद्वा। याव एव यावकः। यावमानसमुद्गाढ़ज्ञाताऽज्ञातार्च्चिभिच्चवः। चन्द्री रामगडुखल्लिपुष्ट-दूताश्चतुर्दश। मूले रामक इति। आकृतिगणोऽयं तेन पीतक इति। बृहत्यणु-पुत्रतनुभ्य आच्छादन निपुण कृत्रिम सूत्रेषु। प्रान्तेभ्य एभ्य एष्वर्थेषु क्रमाद्वर्त्तमानेभ्य एभ्यः स्वार्थे कः स्याद्वा। बृहत्येव बृहतिका आच्छादनविशेषः अन्यत्र बृहती औषधिः अणुरेव अणुकः निपुणः अन्यत्र अणुः सूक्ष्मः। पुत्र एव पुत्रकः कृत्रिमः अन्यत्र पुत्रः। तनु एव तनुकं सूत्रम् अन्यत्र तनुश्चैचः। शीतोष्णाभ्यामृतौ। प्रान्ता-भ्यामाभ्याम् ऋतौ वाच्ये कः स्याद्वा स्वार्थे। शीत एव शीतकः उष्णकः ऋतुः अन्यत्र शीतो वायुः उष्णः कम्बलः। लूनविपाताभ्यां पशौ। प्यन्ताभ्यामाभ्यां पशौ वर्त्त-मानाभ्यां स्वार्थे कः स्याद्वा। लून एव लूनकः पशुः विपातकः पशुः अन्यत्र लूनः विपातः। कुमारखेलनेभ्यः। कुमारैः खेल्यते येन तद्वाचिभ्यः स्वार्थे कः स्याद्वा। कन्दुरेव कन्दुकः भ्रमकः गिरिकः शृङ्गकः पचे कन्दुरित्यादि। स्नातशून्यलोहितेभ्यो वेदसमाप्तिरिक्तमणिषु। प्रान्तेभ्य एभ्य एष्वर्थेषु क्रमात् स्वार्थे कः स्याद्वा। वेदं समाप्य स्नातः स एव स्नातकः अन्यत्र स्नातः। शून्य एव शून्यकः धनादिहीन इत्यर्थः। लोहित एव लोहितको मणिः अन्यत्र लोहितः। प्रियादेर्जातौ। प्रान्ता-ज्जातौ प्रियादेः स्वार्थे कः स्याद्वा। प्रिय एव प्रियकः चित्रकः मृगजातिः गुह्य एव गुह्यको देवयोनिजातिः गोल एव गोलकः कुब्राह्मणजातिः। कुञ्ज एव कुञ्जकः तरु-जातिः इत्यादयः प्रयोगदर्शनात् ज्ञातव्याः। काललोहिताभ्यामनित्यवर्णे। प्रान्ताभ्या-माभ्यामनित्यवर्णे वर्त्तमानाभ्यां स्वार्थे कः स्याद्वा। काल एव कालको वैलक्षण्येन लोहित एव लोहितकः पीड़नेन तदनित्यं यत् कदाचित् भवति कदाचिन्न भवति गुणवृत्तेरस्य द्रव्यवाचित्वे त्यो विधीयते न तु गुणवृत्तेरिति। अनित्य इति किं काला लोहिता गौः। यावत् द्रव्यभावित्वान्नित्यो वर्णः। वर्ण इति किम् असति वर्ण-ग्रहणे नित्य इति द्रव्यस्यापि विशेषणं स्यात् तर्हि लोहितिकाः समुद्राः पार्थिवाः परमाणव इत्यत्र को न स्यात् तेषां नित्यत्वात् सति वर्णग्रहणे नित्येऽपि द्रव्येऽनित्ये वर्णे त्यः सिद्ध्यति। रक्ताच्च। रक्तार्थे विहितात् स्वार्थे को वा स्यात्। कालेन रक्तः कालः काल एव कालकः वा लोहितकः काललोहिताभ्यामेव विधिः यद्य-ऽन्योर्यावत् द्रव्यभाविता तदेवोदाहरणमनित्यतायान्तु पूर्वेणैव। लोहिनीशब्दादपि के स्वे लोहिनिकेति भवति अन्यत्र लोहितेति। अनात्यन्तिके कात्। प्रान्ताद

नात्यन्तिकविशिष्टे वर्त्तमानात् क्तान्तात् स्वार्थे को वा स्यादनात्यन्तिकं भिन्नं भिन्नकम् अनात्यन्तिक इति किं भिन्नम् अत्यन्तमेव भिन्नमित्यर्थः। सामिक्ततम् अर्द्धभुक्तं नैमिक्तवमित्यत्र न भवति अनात्यन्तिकस्य साम्यादिभिरुक्तत्वात् स्वयं साम्यौक्तेनेति वमः। अर्द्धभुक्तमित्यत्र साम्यार्थे स इत्येके। अथवा विशेषण सः हुसी वा। वह्वभिन्नोपपन्नसुकरादेस्तरात्। प्रान्तात् बह्वादिपूर्वतरात् स्वार्थे कः स्याद्वा। बहुतरकम् अभिन्नतरकम् उपपन्नतरकं सुकरतरकं तरादिति किं बहुतरमित्यादि। ईयसौः। प्रान्तादीयसुत्यान्तात् स्वार्थे कः स्याद्वा। श्रेयानेव श्रेयस्कः। पूरणान्ताद् ग्रहणे तस्य लुक् वा। गृह्यतेऽनेनेति ग्रहणं रूपादि प्रान्तात् पूरणत्यान्ताद् ग्रहणे वर्त्तमानात् स्वार्थे को वा स्यात्तस्य पूरणत्यस्य लुक् वा स्यात्। द्वितीयमेव द्वितीयकं द्विकं रूपं द्वितीयेन रूपेण गृह्यते इत्यर्थः एवं तृतीयकं त्रिकं चतुर्थकं चतुष्कम्। उपधिचतुष्पाद्भ्यां ष्णेयः। प्रान्तादुपधेश्चतुष्पादाद्वाचिनश्च स्वार्थे ष्णेयः स्याद्वा। उपधीयत इत्युपधिः रथाङ्गम्। उपधिरेव औपधेयम्। शरण एव शारणेयः भारणेयः। अहमादिवर्णेभ्यः कारो रात्रेफः। प्रान्तादहमादेर्वर्णविशेषवाचकाच्च कारः स्याद्वा स्वार्थे रवर्णात्तु एफश्च। अहमेव अहङ्कारः एव एव एवकारः ओमेव ओङ्कारः सत्यमेव सत्यङ्कारः तुरेव तुकारः टुरेव टुकारः इत्यादि। वर्णात्तु अ एव अकारः औकारः ककारः हकार इत्यादि। र एव रेफः। उपसर्गापवादयोः क्वचिदुत्सर्गोऽपि निविशते इति न्यायात् रकार इत्यपि तथाच रकारादीनि नामानि शृण्वतो मम पार्वतीति। मृदस्तिकः प्रशंसायान्तु सस्नौ। प्रान्तात् मृच्छब्दात्तिकः स्याद्वा स्वार्थे प्रशंसायान्तु सः स्नश्च। मृदेव मृत्तिका प्रशस्ता मृत् मृत्स्ना मृत्स्ना च। रूपनामभ्यां धेयो भागात्तु यश्च। प्रान्ताभ्यामाभ्यां स्वार्थे धेयः स्याद्वा भागशब्दात् तु धेयो यश्च। रूपधेयं नामधेयं भागधेयं भाग्यम्। देवात्तः। देव एव देवता स्वभावात् स्त्रीत्वम्। नवाद्द् यईन तना नूश्च तेषु। प्रान्तात् नवशब्दात् य त ईन तन एते स्युः स्वार्थे। तेषु नवशब्दस्य नूरादिश्यते। नवमेव नव्यं नूत्नं नवीनं नूतनम्। प्रान्नवेनतनाः। प्रान्तात् प्रशब्दात् न त ईन तन इत्येते स्युः स्वार्थे। प्र एव प्रणं प्रत्नं प्रीणं प्रतनम्। तीयादविद्यार्थात् ष्णीकः। प्रान्ताद्विद्याव्यतिरिक्तार्थात् तीयान्तात् स्वार्थे ष्णिकः स्याद्वा। द्वितीयैव द्वैतीयीकी तार्त्तीयीकी अविद्यार्थादिति किं द्वितीया विद्या। अध्यध्यन्ता षड्चाशितङ्गलं कर्म्म पुरुषादीनः। प्रान्तेभ्य एभ्यः स्वार्थे ईनः स्यात् वा। अधिशब्द आयत्तपर्य्यायः। अध्येव अधीनः तथाच अस्मास्वधीनं किमु निस्पृहाणामिति भारविः। अधिशब्दः शौण्डादिः गुरुषु अधि

गुर्वधि गुर्वध्येव गुर्वधीनः एवं ब्राह्मणाधीनः। भाष्यकारमते तु केवलादधिशब्दात् यः तन्मतेऽधीन इति च। षड् अक्षीणि यस्मिन् षडक्षः न षडक्षः अषडक्ष एव अषडक्षीणः द्वाभ्यामेव कृतो मन्त्रः। आशितास्तृप्ता गावो यस्मिन् वने तत् आशितङ्गु सूत्रनिर्देशादाशितस्य मन् आशितङ्ग्वेव आशितङ्गवीनम्। अलं कर्म्मणि अलंकर्म्म तदेव अलंकर्म्मीणम् अलं पुरुषाय अलंपुरुषः स एव अलंपुरुषीणः भावप्रधानोऽत्र पुरुषशब्दः अलंपुरुषभावाय इत्यर्थः गोष्ठाङ्ग्वतपूर्वे णीनः। प्रग्न्तात् तपूर्वे वर्त्तमानाङ्गोष्ठशब्दात् स्वार्थे णीणी वा स्यात्। भूतपूर्वं गोष्ठं गोष्ठीनं भूतपूर्वं इति किं गोष्ठी वर्त्तते। वस्तुनि जात्यन्तादीयः। प्रग्न्तादस्तुनि द्रव्ये वर्त्तमाना-ज्जातिशब्दान्तात् स्वार्थे ईयः स्यात् वा। ब्राह्मणो जातिरस्य ब्राह्मणजातिः ब्राह्मणजातिरिव ब्राह्मणजातीयः तज्जातीयः वस्तुनि किं ब्राह्मणजातिरदुष्टा। स्थानान्तात् तत्तुल्ये वा। प्रग्न्तात् तत्तुल्ये वर्त्तमानात् स्थानान्तात् स्वार्थे ईयः स्यात् वा। पितृस्थानीयः पितृस्थानः राजस्थानीयः राजस्थानः तत्तुल्य इत्यर्थः। मानार्थे-वत्वन्तान्मात्रवद्वयसटौ। प्रग्न्तान्मानार्थे वत्वन्तात् स्वार्थे मात्रद्वयसटौ स्यातां वा। कियदेव कियन्मात्रं कियद्द्वयसं तावन्मात्रं तावद्द्वयसं स्त्रियां कियन्मात्री कियद्द्वयसीत्यादि पक्षे कियदिति। विशोजातौ ण्यः। प्रग्न्ताज्जातौ वर्त्तमानात् विशशब्दात् स्वार्थे ण्यः स्यात् वा विडेव वैश्यः विट्च जाताविति किं विशाचम्। सुरत्नेमसत्त्वयविष्ठात् यः। प्रग्न्तेभ्य एभ्यो यः स्यात् वा स्वार्थे। सूर एव सूर्यः स्तैन्यं सत्त्यं यविष्ठ्यः पक्षे सूर इत्यादि। पूगादमुख्यपूर्वात्। पूगाः सङ्घा नानाजातीया अनियतवृत्तयो धर्म्मकामप्रधानास्तद्वाचिनः शब्दादमुख्यपूर्वाण्यः स्यात् अनिर्दिष्टार्थाख्याः स्वार्थे भवन्ति इति न्यायास्ताः स्वार्थे लौहध्वजशब्दः सङ्घवाचकः लौहध्वज्यः शिविशब्दात् शैव्यः स्वमुख्यपूर्वात् तु देवदत्तो मुख्योऽस्य देवदत्तको लोकः स एषां मुख्य इति कः अत्र देवदत्तशब्दो मुख्यवाचकोऽस्य पूर्वावयव इति अस्मात् ण्यो न स्यात्। वाहीकेष्वराजन्यादब्राह्मणादायुधजीविसङ्घात् ण्यः। वाहीकेषु आयुधजीविनां सङ्घवाचकात् राजन्यशब्दभिन्नात् ब्राह्मणजातिवर्ज्जात् ण्यः स्यात् नञ्द्वयेन ब्राह्मणराजन्ययोर्जातिस्वरूपे अवगन्तव्ये कौण्डीवृषशब्दात् कौण्डीवृष्यः क्षौद्रक्यः मानव्यः वाहीकेस्विति किं शवरपुलिन्दः अराजन्यादिति किं शालङ्कायनः आयुधः जीविनामिति किं मन्दः सङ्घादिति किं वक्रघोणः। वृकात् णोन्यः। आयुधजीविसङ्घवाचकात् वृकशब्दात् णोन्यः स्यात् स्वार्थे। वार्केन्यः। जातिशब्दान्माभूत् कामक्रोधौ मनुष्याणां खादितारौ वृकाविव। दामन्यादेरीयः।

## ४३७। केऽकः स्वो ह्रे तु वा।

के ७।, अकः ६।, स्वः १।, ह्रे ७।, तु ।१।, वा ।१। ।

कन्यका सुकन्यकः सुकन्याकः। शिवो देवता यस्यासौ शैवः शान्तेयः।

---

आयुधजीवसङ्घाद्दामन्यादेरीयः स्यात्। दामनीयः। दामनी सौमपादिश्च सावित्रीपुत्रः औदधिः। काकन्दक्या वितस्ती च सार्वसेनिश्च वैदधिः। औदकिर्बैजवापिश्च शाकुन्तकिस्तथौपनिः। मौञ्जायनः समुद्दिष्टा दामन्यादौ त्रयोदश। क्रौष्टुक्यादेस्त्रिगर्त्तेषु। आयुधजीविसङ्घात् क्रौष्टुक्यादेः स्वार्थे ईयः स्याद्वा। क्रौष्टुकीयः। क्रौष्टुकिर्ब्रह्मगुप्तिश्च कालाषि दाण्डकी तथा। जालमर्षिर्जालकिश्च कौण्डोपरथ इत्यपि। पर्शूयौधेयादिभ्यां षाट्वावस्त्रियाञ्च आयुधजीविसङ्घात् पर्श्वादेः षाः यौधेयादेः ट्ञः स्याद्वा स्वार्थे। पर्शूशब्दः ह्रस्वशब्दवत् व्युत्पन्नः। पार्शवः ब्वे पर्शूस्त्रिगर्त्ताः स्त्रियां पर्शूः। पर्शूरची मरुत् सत्वत् वाह्नीकवसवोऽसुरः। दाशार्हश्च पिशाचश्च वयः कार्षापणोऽशनिः। सन् यस्यास्ति वत्वन्तः। यौधेयादेः यौधेयः ब्वे यौधेयाः अजादेराकृतिगणत्वात् स्त्रियां यौधेया इत्यादि। यौधेयौशीनरावेयशौभ्रेयभरता अमी। यौक्तेयधार्त्तेयौ च त्रिगर्त्तोऽत्र नव स्मृताः। आयुधजीविनिवृत्तं सङ्घ इति प्रवर्त्तते। व्रातवचनाञ्ञ्यः। ये नानाजातीया अनियतवृत्तयः उत्सवजीविनस्ते व्राता सङ्घास्तेभ्यो ञ्यः स्याद्वा स्वार्थे न तु स्त्रियाम्। व्रात्यः त्रैहसत्यः कापोतपाक्यः अस्त्रियामिति किं व्रातेति। अभिजिदादेरपत्यणान्तात् षाः। सङ्घादिति निवृत्तम् अभिजिदादेरपत्यणान्तात् षाः स्यात् स्वार्थे न तु स्त्रियाम्। अभिजितोऽपत्यम् आभिजितः स एव आभिजित्यः। अभिजिद्विदभृच्छालावद्धूर्णावत् श्रमता सह। शिखावच्च शमीवच्च शश्वदष्टात्र कीर्त्तिताः। अपत्यग्रहणं किम् अभिजिद्देवता अस्य आभिजितः स्थालीपाक इत्यादौ न स्यात्। अस्त्रियामिति किम् आभिजित्यः स्त्रियः। अस्यापत्यार्थत्वात् अभिजित्यस्यापत्यं युवा अभिजित्यायन इति। पूगण्यादेर्लुग् ब्वे। पूगाञ्ञ्य इत्यादि स्वार्थिकाल्या ब्वे लुक् स्यात् न तु स्त्रियाम्। लौहध्वजाः। कपोतपाकाः कौण्डीवृषाः हकाः दामनयः क्रौष्टुकयः पर्शवः त्रिगर्त्ताः अभिजिता इत्यादि अस्त्रियामिति किं लौहध्वज्यः स्त्रियः एवं कौण्डीवृष्यः अजादित्वादाप् दामनीयाः स्त्रियः उक्ताः स्वार्थाः॥ ४३६॥

अकः ह्रस्वः स्यात् कणि परे बहुव्रीहौ तु वा। कन्या एव कन्यका अत्र अणित् कणि कृते अनेन ह्रस्वे स्वार्थप्रत्ययान्तास्तल्लिङ्गा एवेति स्त्रियामत आप्। एवं कृपाणिका सेनानिकः यवसूकः वामोरुका इति। शोभना कन्या यस्य इति बहुव्रीहौ सुकन्यकः सुकन्याकः अत्र वा ह्रस्वः। अक इति किं नौरेव नौका। अत्र वाशब्दस्य व्यवस्थावाचित्वात् समासे क्वचिद्बसे परेऽपि अकः ह्रस्वः स्याद् इति बोध्यम्। तेन कालिदासकविता नवं वय इति रघोद्धतायामुद्भटः। वैदेहिबन्धोर्हृदयं विदद्रे इति रघुः। अश्लेषपित्र्यमवह्निविशाखयुक्तमिति दीपिका। विबुधकृतिरभीष्टा नाडीनक्षत्रहीने इति च दीपिका। विरहिनिकृन्तन कुन्तमुखाकृतिकेतकिदन्तुरिताशे इति जयदेवस्य सङ्गच्छते। आदि पदस्य उदाहरणमाह शिवो देवता यस्यासौ शैवः अत्र णः एवं शाक्तेयः अत्र ण्येयः एवं शाक्तः वैष्णवः गाणपत्य इत्यादि। एवं शाखा मुख अग्रजघन स्कन्ध तरस शरण चरण शृङ्ग मेघ विरस द्रुमः साम्ये यः। शाखा इव शाख्यः मुखमिव मुख्यम् इत्यादि एवं कर्मणि अलं कर्मीणः कर्मसमर्थः अलं पौरुषाय अलंपौरुषीणः। अव्ययादधिशब्दादीने अधीनः आयत्तः प्राञ्चतीति प्राचीन इत्यादि। एवं तदस्यां क्रीड़ायां प्रहरणं इत्यर्थेऽपि दण्डः प्रहरणमस्यां दण्डा क्रीड़ा मुष्टिः प्रहरणमस्यां मौष्टा क्रीड़ा इत्यादौ अणित् णः। एवं घञन्तात् धोऽस्यामित्यर्थेऽपि अणिति णे दण्डपातोऽस्यामिति दाण्डपाता फाल्गुनी। श्येनपातोऽस्यामिति श्यैनम्पाता मृगया तिलपातोऽस्यामिति तैलंपाता स्वधा। उभयत्र अणित् णे मकारागमो निपात्यः। न विद्यन्ते षड्क्षाणि यत्र सोऽषड्क्षीणो मन्त्रः। अत्र ईनः। अन्यान्यप्युदाहरामि। भिक्षादेः समूहे णः। भिक्षाणां समूहो भैक्षम्। भिक्षादिस्तु। भिक्षा गर्भिणी युवति सहस्र करीष अथर्वन् चीत्र अङ्गार पद्धति दक्षिण [illegible] श्वन् युग वरत्रा हरिद्रा बड़वा हलबन्ध भिक्षुक शुक उलूक इत्यादि। २२। वाड़वादेः समूहे अणित् ण्यः। वाड़वानां समूहो वाड़व्यम्। वाड़वादिस्तु। वाड़व मानव ब्राह्मण पृष्ठ इत्यादि। ४। राजन्यादेः समूहे कण्। राजन्यानां समूहः राजन्यकम्। राजन्यादिस्तु। राजन्य राजन् शैलूष शालङ्कायन जालन्धरायण अर्जुनायन सम्प्रिय मानव त्रिगर्त्त भट विराट ऊर्णनाभ दैवयात ऐडुम्बर वैल्लवन बाभ्रव आग्नीस आर्थकामिय अम्बरीष पुत्र विल्लवन वैकर्ण वत्स धेनु हस्तिन् लक्षण दाक्ष वसति इत्यादि। २७। दाक्षिवसत्योरिकारस्य च अकारः। दाक्षीणां समूहो दाक्षकं एवं वसतीनां वासतकम्। वृद्धात् समूहभावयोः कण्। वृद्धानां समूहो भावो

वा मार्द्दकम् । पाशादे: समूहेऽर्थित् ण्य: स्त्री । पाशानां समूह: पाश्या । पाशादिस्तु । पाश तृण धूम हलवात वन अङ्गार गड़ पिटक पोट पेट गल खल गव गोरथ इत्यादि । १६ । ब्राह्मणादेर्भावकर्म्मणो: ण्य: । ब्राह्मणस्य भाव: कर्म्म वा ब्राह्मण्यम् । ब्राह्मणादिस्तु । ब्राह्मण मानव वाड़व चौर धूर्त्त आबाधय विबाधय उपबाधय अपबाधय एकभाव द्विभाव त्रिभाव अन्यभाव अक्षेत्रज्ञ संवादिन् संवेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् समस्थ विषमस्थ मध्यस्थ अनीश्वर कुशल चपल निपुण पिशुन बालिश अलस दुष्पुरुष कापुरुष गणपति अधिपति दायाद विशस्ति विशाय परमस्थ रविसहाय गडुल विज्ञात इत्यादि । ४१ । मित्रादेर्भावावकर्म्मणो: ण्य: स्त्री वा । मित्रस्य भाव: कर्म्म वा मैत्र्यम् । पित्रादीपि सूर्य्यागस्त्यस्य इति यलोपे मैत्री । मित्रादिस्तु । मित्र उचित चतुर अनुपूर्व यथाकाम समग्र रुद्र इत्यादि । वणिक्दूताभ्यां भावकर्म्मणो: ण्यौ यश्च । वणिजो भाव: कर्म्म वा वाणिज्यं वणिज्यम् एवं दौत्यं दूत्यम् । सख्युर्य: । सख्युर्भाव: कर्म्म वा सख्यम् । स्तेनाद्य: यी न लोपश्च । स्तेनस्य भाव: कर्म्म वा स्तेयम् । कपिज्ञातिभ्यां णेय: । कपेर्भाव: कर्म्म वा कापेयम् एवं ज्ञातेयम् । लघुपूर्वादुदन्ताद्भावे ण: । लाघवं गौरवं मार्दवं पाटवं लघुपूर्वात् किं शत्रुत्वम् । युवादिहायनान्ताभ्यां भावे ण: । यूनो भाव: यौवनम् । युवादिस्तु । युवन् चपल कुशल निपुण पिशुन स्थविर सुहृद् कुतूहल सुभ्रातृ दुर्भ्रातृ यजमान धातृ कर्णाक कुण्डक श्रवण कमण्डलु कुस्त्री दुस्त्री सुहृदय दुर्हृदय तृष्ण परिव्राजक सुब्रह्मचारिन् अनृशंस क्षेत्रज्ञ इत्यादि । २६ । द्वैहायनं त्रैहायनमित्यादि । अचतुरस्य भाव: अचातुर्य्यम् एवम् असङ्गतस्य असाङ्गत्यम् अलवणस्य अलावण्यम् एभ्य: ण्य: अपटोर्भाव: अपाटवम् अत्र ण: । एषु सुपञ्चालादित्वादन्त्यपदस्य वृद्धि: । दुर्गसिंहस्तु एषु पूर्वपदस्य वृद्धिं कृत्वा आचतुर्य्यम् आसङ्गत्यम् आलवण्यम् आपटव्यम् इत्याह । एवं कूपस्य कौपीनम् अकार्य्ये गुह्ये कौपीनमित्यमरात् । एवं शालाया: शालीनोऽप्रगल्भ: उभयत्र खीन: । वत्सेभ्यो हितो वत्सीय: गोभ्यो हितं गव्यं वनमित्यादि । मन एव मानसम् अत ण: तारा एव तारका अत कण् । इवशब्दात् तुल्यार्थेऽपि क: । अश्व इवायम् अश्वक: एवं देवदत्तक इत्यादि । एवं वङ्गस्य राजा वाङ्ग: अत ण: एवं कौरव्य: कौशल्य: पाण्ड्य: एभ्य: ण्य: अत पाण्ड्योरुकारलोपो निपात्य: । कसीनेयाश्चेति चकारोऽनुक्तसमुच्चयार्थोऽपि । तेन प्रयोगानुसारादन्येऽपि प्रत्यया: स्यु: । यथा प्रावृषि भव: प्रावृषेण्य: ण्य: वरेण्य: भ्रातुरपत्यं भ्रातृव्य: । कर्म्मणि शूर: कर्म्मठ: । सजातीय

सहायाभावे एकादाकिन्की । एक एव एकाकी एकक: । स्वद: सत्नौ प्रशंसा-याम् । प्रशस्ता स्वत् स्वत्ता स्वत्का एवम् अवेदुग्धम् इत्यर्थे अविलग्नम् अविसोढ़म् अविसम् अत्र षत्वाभावो निपात्य: । एवम् अवेर्विस्तरोऽविपट: । देवात् स्वार्थे त: । देव एव देवता स्त्रीत्वमभिधानात् । वर्णात् स्वार्थे कारतौ । अकारोऽत् आकार: आत् औकार: औत् हसात्तु कार । ककार: चकार: ओङ्कार: वषट्कार: । रादेफ: । र एव रेफ: निष्फले तिले तिलपेज: तिलपिञ्ज इत्यादि । अथ निपात्या: द्रुमवाचिनां फले वाच्ये इदमर्थे कृतस्य तद्धितस्य लुकि क्लीवत्वम् । आम्रस्येदं फलम् आम्रम् एवं नारिकेलं तालमित्यादि । हरीतक्यादेस्तु फले वाच्ये इदमर्थे कृततद्धितलुकि तल्लिङ्गत्वम् । हरीतक्या इदं फलं हरीतकी हरितक्यादिस्तु । हरीतक्यस्त्रिकी पथ्यान्हदीकापिप्पलीकणा: । चिञ्चा कोशातकी द्राक्षा कर्कटी कण्टकारिका । श्वेतपाकी च कर्कारु रेवा लिलादय: स्मृता इति । रूपत्रयं फले जम्बा जम्बू: स्त्री जम्बु जाम्बवम् । मल्लिकादे: पुष्पे वाच्ये तद्धितलुकि तल्लिङ्गत्वम् । मल्लिकाया: पुष्पं मल्लिका । मल्लिकादिस्तु । मल्लिका सुमनो मुस्ता विदारी शाल-पर्ण्यपि । जाती हरिद्रा गम्भारी वृहती मल्लिकादय: इति । व्रीहिणामपि फले वाच्ये तद्धितलुकि तल्लिङ्गत्वम् । यथा यवस्य फलं यव: एवं मुद्ग: तिल इत्यादि । एवं शुक्लादिकषायादिशीतादीनां गुणवाचिनामस्त्यर्थप्रत्ययस्य लुकि विलिङ्गत्वम् । यथा शुक्ल: पट: शुक्ला धेनु: शुक्लं पुष्पम् एवं मधुरो गुड: मधुरा सिता मधुरं फलम् । एवञ्च शीतो वायु: शीता नदी शीतं जलमित्यादि ॥ ४३७ ॥

श्री·रा·टी—अक् प्रत्याहार: अक: के परे स्व: स्यात् हसे तु वा । कन्यकेति कन्या-शब्दात् यवादित्वात् क: अनेन स्व: सुकन्याका इति शोभना कन्या यस्या इति वाक्य पक्षे सुकन्यका वा स्व: । णिकोऽस्मै सदा दीयते । प्रान्त्यादस्मै इत्यर्थे णिक: स्यात् य: प्रान्तनिर्दिष्ट: सदा दीयते चेद्भवति अग्रभोजनं सदा दीयते अस्मै आग्रभोजनिक: प्राथमकल्पिक इत्यादि । प्राणामांसौदनमांसौदनात् षिक: । प्रान्तेभ्य एभ्योऽस्मै सदा दीयतेऽर्थे षिक: । प्राणा: सदा दीयतेऽस्मै प्राणिक: मांसिक: औदनिक: स्त्रियां प्राणिकीत्यादि प्राणिकभार्य्य इत्यादौ षिकविधानात् । पुंवद्भाव इत्येके भक्तात् णो वा । भक्तं सदा दीयतेऽस्मै भाक्त: पक्षे पूर्वेण णिक: भाक्तिक: । अथ देवता । प्रान्त्यादस्येत्यर्थे वैत्यादित्वात् ष: स्यात् यत् प्रान्तनिर्दिष्टं सा देवता चेद्भवति । शूलि शिवो देवतास्येति शैव: शाक्त इति शक्तिर्देवतास्य इति वाक्यं देवताशब्देनेह देयस्य परिग्रहादे: सामीप्यते यथा शैवं हविरित्यादि कथं शैवी मन्त्र: शैव: स्तव इत्यादि

सत्यं शिव प्रकाशकत्वेन सन्नमस्त्यादि शिवो देवतेत्युपचार इति। यमादिस्तु याम्यम् आदित्यं प्राजापत्यं पाशुपतं आग्नेयः आग्नेयी ब्राह्मण इत्युपमानात् कालेयं देवं दैव्यम् औत्समित्यादि। कस्य चे कायः। कः प्रजापतिः को देवतास्य कायं हविः। शुक्रादियः। प्रान्तात् शुक्रशब्दात् देवतास्येत्यर्थे इयः स्यात् णस्यापवादः। शुक्रो देवतास्य शुक्रियम्। शतरुद्रादेरीयश्च पतेः प्रश्च। प्रान्ताच्छतरुद्रादेर्देवतास्येत्यर्थे इय ईयश्च स्यात् तयोपतेः प्रादेशः। शतरुद्रो देवतास्य शतरुद्रियं शतरुद्रीयम्। अपोनपात् अपांनपात् शब्दो देवताविशेषवाचको अपोनपाद्देवतास्य अपोनप्त्रियम् अपोनप्त्रीयम् अपांनप्त्रीयम्। शतरुद्रा अपोनपात् अपांनपात् इति त्रयम्॥ ७॥ महेन्द्राद्वा तौ। प्रान्तान्महेन्द्रशब्दात्तौ इय ईयौ वा स्यातां देवतास्येत्यर्थे महेन्द्रो देवतास्य महेन्द्रीयं महेन्द्रियं पक्षे माहेन्द्रमिति। वायुपैङ्गाक्षीपुत्रादिभ्यां येयौ। प्रान्ताद्वाय्वादेर्यः पैङ्गाक्षीपुत्रादेरीयः स्यात् देवतास्येत्यर्थे। वायुर्देवतास्य वायव्यं वायव्यं तुरुषः पिता चतुष्कं परिकीर्त्तितम्। पैङ्गाक्षी पुत्रो देवतास्य पैङ्गाक्षी-पुत्रीयं तृणविन्दवीयं पैङ्गाक्षीपुत्रतृणविन्दू द्वौ। मरुत्वतादेश्च। प्रान्तात् मरु-त्वतादेर्देवतास्येत्यर्थे येयौ स्यातां मरुत्वान् देवतास्य मरुत्वत्यं मरुत्वतीयं शुनो वायुः शीर आदित्यः शुनश्च शीरश्च ते देवे ते अस्य शुनाशीर्य्यं शुनाशीरीयम्। मरुत्वद्ध-ह्यग्नेवाग्नीषोम द्यावा पृथिव्यपि। वस्तोपातिः शुनाशीर इह षट् परिकीर्त्तिताः। सोमात् ष्यः। अत्रार्थे स्यात् सोमो देवतास्य सौम्यं हविः। अपत्योपलक्षकत्वात् सोमो ऋक् ष्यस्य लोपः। महाराजप्रोष्ठपदाभ्यां णिकः। प्रान्ताभ्यामाभ्यां देव-तास्येत्यर्थे णिकः स्यात् महाराजो देवतास्य माहाराजिकः प्रौष्ठपदिकः। कथं महाराजिक इति महती राजिर्यस्येति द्वे कः कालेभ्यो भववत्। येभ्यः काल-वाचिभ्यो भवार्थे ये त्या विहितास्तेभ्यः प्रान्तेभ्यस्तेभ्यो देवतास्येत्यर्थे स्युः। मासो देवतास्य मासिकं सांवत्सरिकं वासन्तं हैमन्तं हैमनं प्रावृषेण्यमिति छन्दोभ्यस्त-दादि प्रागर्थे प्रान्तेभ्यश्छन्दोवाचिभ्यश्छन्द आदि प्रागर्थे वेत्यादित्वात् णः स्यात्। पङ्क्तिरादिर्यस्य प्रागर्थस्य पाङ्क्तः प्रगाथः आनुष्टुभः प्रगाथः यत्र प्रगन्थनात् प्रगाथ-त्वात् द्वे ऋचो तिस्रः क्रियते समस्तप्रगाथः। तदादीति किम् अनुष्टुम् मध्यात्मास्य प्रगाथस्य प्रगाथ इति किं पङ्क्तिरादिरस्यानुवाकस्य छन्दोभ्य इति किम् उदन्यशब्द आदिरस्य प्रगाथस्य। योद्धृप्रयोजनेभ्यो युद्धस्य। प्रान्तात् युद्धवाचिनः प्रयोजन-वाचिनश्चास्येत्यर्थे वेत्यादित्वात् णः स्यात् यत् षोनिर्दिष्टं तत् युद्धं चेद्भवति। अर्जुनो योद्धास्य संग्रामस्य आर्जुनः संग्रामः पञ्चालो योद्धास्य संग्रामस्य पाञ्चालः

संग्रामः सुभद्रा प्रयोजनमस्य सौभद्रः संग्रामः। संग्राम इति किं सुभद्रा प्रयोजनमस्य दानस्य। योद्धृप्रयोजनेभ्य इति किं सुभद्रापेक्षितास्य संग्रामस्य। कालेभ्यः सोढ़े। प्रान्तेभ्यः कालवाचिभ्यः सोढ़ार्थे वर्त्तमानेभ्योऽस्येत्यर्थे भवादित्वात् यथाविहितं त्याः स्युः। सोढ़ं जितमभ्यस्तमित्यर्थः। निशासहचरितमध्ययनं निशा तत् सोढ़मस्य छात्रस्य नैशश्छात्रः नैशिकः प्रादोषः प्रादोषिकः निशासम्यध्ययनमभ्यस्यतीत्यर्थः। निवासे। प्रान्तान्निवासेऽर्थे वर्त्तमानात् यथाविहितं भवादित्याः स्युः। निवसत्यस्मिन्निवासः यत् प्रान्तनिर्दिष्टं स निवासश्चेद्भवति। स्रुघ्नी निवासोऽस्य स्रौघ्नः पुरुषः। अभिजने। अभिजनाः पूर्वबान्धवास्ते सन्ति यत्र सोऽभिजनः अर्शादित्वादः तथाच यत्र सम्प्रत्युष्यते स निवासः यत्र बान्धवैः पूर्वमुषितः सोऽभिजन इत्यर्थः। प्रान्तादभिजनार्थे वर्त्तमानात् भवादित्वादस्येत्यर्थे यथाविहितं त्याः स्युः। स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः पुरुषः माथुरः राष्ट्रियः इत्यादि पृथग्ग्रहणमुत्तरार्थम्। सिन्धुतक्षशिलादिभ्यां ष्णञ्। प्रान्ताभ्यामाभ्यामभिजनेऽर्थे वर्त्तमानाभ्याम् अस्येत्यर्थे क्रमात् ष्णञ् स्याताम्। सिन्धुरभिजनोऽस्य सैन्धवः। सिन्ध्वादिर्यथा। सिन्धुकश्मीरकिष्किन्ध्य शवककम्बोजवर्णवः। गन्धार दरदौ शाल्वशण्डिका मधुमत्तथा। उरसा च त्रय प्रोक्ताः शब्दा द्वादश कोविदैः। सिन्धुवर्णमधुकश्मीरशाल्वानां पाठः कच्छादित्वात् न तत्स्थयोर्लुक्बाधनार्थः। शेषाणां स्वविषयादिति षकबाधनार्थः। तक्षशिलादेस्तावत् तक्षशिलाभिजनोऽस्य ताक्षशिलः। इह तक्षशिलावस्ती वत्सोद्धरणवर्बटी। शवलग्रामणीकौतांवरसङ्कुचिता अपि। कौमेद्धरारोषसिंहकोष्ठाश्च काण्डवारणाम्। कंसच्छिन्नी च कौत्सश्च शब्दाः षोडश कीर्त्तिताः। कौत्स संवरग्रामणी काण्डवारणानां जनपदत्वात् षकबाधनार्थः शेषाणां स्वविषयादिति षकबाधनार्थः। ईयो गिरिभ्यः शस्त्रजीविनि। प्रान्तेभ्योऽभिजनेऽर्थे वर्त्तमानेभ्यो गिरिवाचिभ्योऽस्येत्यर्थे शस्त्रजीविनि वाच्ये ष्णियः स्यात्। हृद्गोणी गिरिरभिजनोऽस्य हृद्गोणीयः शस्त्रजीवि कुद्दालीयः शस्त्रजीवी। शस्त्रजीविनीति किम् ऋक्षोदो गिरिरभिजनोऽस्य विप्रस्य आर्क्षोदो ब्राह्मणः गिरिभ्य इति किं साङ्काश्योऽभिजनोऽस्य साङ्काश्यकः शास्त्रजीवी। शाण्डिकादेर्ण्यः। प्रान्तादभिजनेऽर्थे वर्त्तमानात् शाण्डिकादेरस्येत्यर्थे ण्यः स्यात्। शाण्डिक्योऽभिजनोऽस्य शाण्डिक्यः सार्वसेन्यः। शाण्डिका सर्वसेनश्च सर्वकेशो बुधैर्हि षट्। शकग्रामाथः शकवकः कलवाचः प्रकीर्त्तितः। तुदीवर्म्मतीभ्यां ष्णेयः। प्रान्ताभ्यामाभ्यामभिजनेऽर्थे वर्त्तमानाभ्यामस्यार्थे ष्णेयः स्यात्। तुदी अभिजनोऽस्य तौदेयः

वार्म्मेनेयः। शालातुराश्नीयः। शालीतुरीऽभिजनीऽस्य शालातुरीयम्। सेव्ये। प्रान्तात् सेव्येऽर्थे वर्त्तमानादस्येत्यर्थे भवादित्वात् यथाविहितं त्याः स्युः। स्रुघ्नः सेव्योऽस्य स्रौघ्नः माथुरः राष्ट्रिय इत्यादि। अकालदेशादचित्तात् णिकः। प्रान्तात् कालदेशभिन्नादचित्तवाचकात् सेव्येऽर्थे वर्त्तमानात् अस्येत्यर्थे णिकः स्यात्। अपूपः सेव्यो अस्य आपूपिकः शाष्कुलिकः पायसिकः। अचित्तादिति किं दैवदत्तः अकालदेशादिति किं ग्रैष्मः स्रौघ्नः। महाराजाच्च। महाराजः सेव्योऽस्य महाराजिकः स चित्तार्थोऽयमारम्भः। गोत्रक्षत्रियाख्येभ्यो णको वासुदेवार्जुनाभ्यान्त्वणित्। प्रान्तेभ्यः सेव्येऽर्थे वर्त्तमानेभ्योऽपत्यान्तेभ्यः क्षत्रियाख्येभ्यश्च अस्येत्यर्थे णकः स्यात्। वासुदेवार्जुनाभ्यान्तु अकः स्यात्। ग्लुचुकायनिः सेव्योऽस्य ग्लौचुकायनः औपगवकः। क्षत्रियाख्येभ्यस्तावत् नकुलः सेव्योऽस्य नाकुलकः साहदेवकः शाल्वकः आख्या ग्रहणं प्रसिद्धक्षत्रियग्रहणार्थं तेन मूढक्षत्रियः सेव्योऽस्य मौढः। वासुदेवशब्दोऽत्र देववाची वासुदेवः सेव्योऽस्य वासुदेवकः एवमर्जुनकः। क्वचिदनभिधानान्न भवति पाणिनीयः पौरवीयः। ब्वे रूढाज्जनपदवत्। प्रान्तादभिजनेऽर्थे वर्त्तमानाद्वा विषयाद्देशतुल्याख्यक्षत्रियात् जनपदतद्वाच्विभ्यामित्यादौ यस्मात् यो विहितः तस्मात् स त्यः स्यात् अस्येत्यर्थे। अङ्गाः क्षत्रियाः सेव्या अस्य आङ्गिकः व्याङ्गिकः मद्रकः वृजिकः। ब्व इति किं मद्रस्यापत्यं माद्रः वृजेरपत्य वार्ज्यः वृद्धेत् कोशलेत्यादिना ण्यङ्। माद्रा सेव्यो अस्य माद्रकः वार्ज्यकः। रूढादिति किं पञ्चाला विप्राः सेव्या अस्य पाञ्चालः। णिकः पण्ये किशरादेस्त्वणित् वा शलालुनः। प्रान्तात् पण्येऽर्थे वर्त्तमानादस्येत्यर्थे णिकः स्यात् किन्तु किशरादेः शलालुशब्दात्तु वा। मोदकः पण्यमस्य मौदकिकः आपूपिकः लावणिकः। किशरादेस्तावत् किशरं पण्यमस्याः किशरिकी नलदिकीत्यादि। किशरं नलदं पर्णी हरिद्रोशीरगुग्गुलु। हारिद्रभगवी चैव स्थगरी मदरी दश। किशरादयो दश शब्दा गन्धविशेषवाचकाः। शलालुपण्यमस्य शलालुकः इकस्य कः स्त्रियां शलालुकी पक्षे णिकः शालालुकी। शिल्पे। णिक इत्यनुवर्त्तते प्रान्तात् शिल्पेऽर्थे वर्त्तमानात् अस्येत्यर्थे णिकः स्यात् मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः। पाणविकः शिल्पं कौशलं क्रियाभ्यासपूर्वकज्ञानविशेष इति न्यासकारः। वस्तुतस्तु ज्ञानविशेषजन्याभिघातविशेषः। ननु मृदङ्गवादनं शिल्पमस्येत्यर्थोपादानात् मृदङ्गवादनशब्दात् त्यो भविष्यति कथं मृदङ्गशब्दादिति सत्यं मञ्चाः क्रोशन्तीति वत् मृदङ्गादिशब्दास्तद्वादनेऽप्युपचारात् वर्त्तन्त इति। मड्डुकझर्झराभ्यां णो वा। प्रान्ताभ्यामाभ्यां शिल्पेऽर्थे वर्त्तमानाभ्यां अस्येत्यर्थे

## ५९९। ष्ठिवजाद्योः खेष्ठक्कोस्त वा।

ष्ठि-व-अजाद्योः ६॥, खे: ६।, ठक्को: ६॥, त ।१।, वा-।१।।

तिष्ठेव टिष्ठेव ष्ठीव्यात्।

[ ३७ ] जि जये।

## ६००। जीर्गिः सन्-ठ्योः।

जेः ६।, गिः १।, सन्-ठ्योः ७॥।

जिगाय।

[ ३८ ] रक्ष पालने।

प्रनिरक्षति। षान्तत्वान्न [ ५४९ ] णः।

[ ३९ ] अक्षू व्याप्तौ।

## ६०१। वाक्ष-क्षशार्थतक्षः श्नुर्घे रे।

वा ।१।, अक्ष-क्षशार्थ-तक्षः ५।, श्नु १।, घे ७।, रे ७।।

आभ्यां रे परे श्नुः स्याद्वा घेऽर्थे। अक्ष्णोति अक्षति। [ ५८८ ] श्नुध्वोरित्युव अक्ष्णुवन्ति। [५७३] उदित्वादिम् वा आक्षीत्। [ २१२ ] स्यादेः सो लोपः।

---

जनीम्यङ्जनौ जायते। गमादिसाहचर्य्यात् रे परे जायमानो यः शित् तस्मिन्नेव जनौ जादेशः तेन जन्मलिच इति जौहोत्यादिकस्य शतृशानयोर्जादेशाभावे जज्ञत् व्यतिजज्ञान इति। ननु रे इत्यनेनैवेष्टसिद्धौ शतीति कथमिति चेत् न ऋर्लि-गत्यामित्यस्य इयर्त्तीत्यादौ शपो लुकि तिबादौ ऋच्छादेशापत्तेः॥ ५९७॥

यथा अयंसीत् अयंसिष्टां व्यरंसीत् अनंसीत् अयासीत् गै अगासीत्॥ ५९८॥

ष्ठिव् च अजादिश्च ष्ठिवजादी तयोः। ठ च क्ष च ठक्षौ तयोः ष्ठिवधातोः खेष्ठकारस्य अजादिधातोः खेम्क्षकारस्य च तकारः स्याद्वा। यथा तिष्ठेव टिष्ठेव उक्षीम्बन्धसमापने उतिक्षिषति। उचिक्षिषति ष्ठीव्यादिति व्यंनचतयीति दीर्घः॥ ५९९॥

जिगीषति जिगाय। जेस्तुवन्वीस्तिवन्तीति वक्तव्यम्। जयति रघुवंशतिलकः।

## ६०२ । षढोः कः से ।

ष-ढोः ६॥, कः १।, से ७। ।

षस्य ढस्य च कः स्यात् सकारे परे । आचीत् आचिष्टाम् आष्टाम्, आचिषुः आचुः ।

एवं [ ४० ] तचू कार्श्ये ।

कृशार्थः किं; निर्भर्त्सने सन्तचति ।

[ ४१ ] णिचु चुम्बने ।

[ ५४८ ] प्रणिचति प्रनिचति ।

[ ४२ ] कृषौ विलेखने ।

## ६०३ । कृष मृश स्पृश तृप दृप सृपः सिष्यां वा ।

कृष—सृपः ५।, सिः १।, ष्यां ७।, वा ।१। ।

एभ्यः सिर्वा स्यात् ष्याम् ।

---

जयन्ति यमुनाकूले रङ्गः केलयः । तुपस्थाने तातङ् दृश्यते भावगम्यमना; कोऽपि जयताद्वागगोचर इति हलायुधः ॥ ६०० ॥

कृशार्थश्चासौ तच चेति कृशार्थतच । अतश्च कृशार्थतच चेति तस्मात् । तक्ष्णोति तचति काष्ठं कृत्वा तनूकरोति इत्यर्थः । सन्तचति चौरं साधुर्निर्भर्त्सयतीत्यर्थः । धातूनामनेकार्थत्वात् सन्तचतिरिह निर्भर्त्सनार्थः ॥ ६०१ ॥

आचीदिति अनिम्पचेऽपि ष्यां सिः रुदाद्यस्तीति ईम् स्यादेः सीलोप इति कलोपे अनेन षस्य के क्षिलादिति षः । आष्टामिति अनिम्पचे भासखादिति सिलोपे संयोगादेः कस्य लोपे ष्टुभिरिति तस्य टः । आचुरिति अनिम्पचे सिलोपे त्यलोपे त्यलक्षणमिति न्यायात् अन् उस् । प्रणिचतीति वाल्वननिंसेत्यादिना णत्वं वा ॥ ६०२ ॥

कृषौ त्वाकृषि कृषञौ चेत्युभयं मृशशौ मृशि स्पृशशौ स्पृशि जिल्तृप्यू प्रीणने, दृप्यूङ्हर्षगर्वयोः सृपौ गत्याम् इत्येतेभ्यः सिर्वा स्यात् ष्याम् ऋकारस्य ञ्जो अका-र्यौन् सकि अक्रुचत् ॥ ६०३ ॥

## ६०४। वद्रोऽकिज्झसे हशस्हजोस्तु नित्यम्।

वा।१।, ऋत्।१।, रः १।, अकित्-झसे ७।, हश-स्हजोः ६॥, तु।१।, नित्यम् १।।

कृषादीनाम् ऋकारो रः स्याद्वा अकिज्झसे हशस्हजोस्तु नित्यम्। अक्राक्षीत्, अकार्क्षीत्।

## ६०५। ह्शषोऽनिमिजुङोऽदृशः सक् स्यां श्लिषस्त्वालिङ्गने।

ह-श-षः ५।, अनिम्-इजुङः ५।, अ-दृशः ५।, सक्।१।, स्यां ७।, श्लिषः ५।, तु।१।, आलिङ्गने ७।।

अनिमिजुङो ह-श-षान्तात् दृशवर्जात् सक् स्यात् स्यां, श्लिषतेस्त्वालिङ्गनेऽर्थे। अक्षत्।

[ ४३ ] कृष हिंसायाम्।

## ६०६। वेम् सह लुभ भृ स्तु शुच वस त्वश कृष रिषिषो स्तोऽरस्य।

वा।१।, इम्।१।, सह—इषोः ५।, तः ६।, अरस्य ६।।

एभ्यस्तस्यारस्य इम् स्याद्वा। रोषिता रोष्टा।

एवं [ ४४ ] रिष हिंसायाम्।

---

वाशब्दस्य व्यवस्थावाचित्वात् सनि स्हज्हशोर्ऋकारस्य रेफो न स्यादिति बोध्यम्। यथा दिदृक्षते सिसृक्षति। वा ग्रहणमुत्तरत्र नित्यार्थम् ॥६०४॥

ह्श तालव्य-शश्च मूर्द्धन्यष चेति तस्मात्। नास्ति इम् यस्मात् सोऽनिम् इच् उङ् यस्य स इजुङ् अनिम् चासौ इजुङ् चेति अनिमिजुङ् तस्मात्। अनिमिजुङ इति ह्शषो विशेषणम्। नास्ति दृश् यत्र सोऽदृश् तस्मात्। अनिमिजुङे हान्तात्तालव्यशान्तान्मूर्द्धन्यषान्ताच्च दृश्वर्जात् सक् स्यात् स्याम्। श्लिष्यतेस्तु आलिङ्गनेऽर्थे इत्यर्थः। यथा मिहौ सिचि अमिक्षत् रुहौ अरुक्षत् दिशश्रीञ अदिक्षत् क्रुशजौ अक्रुक्षत् स्पृशश्री अस्पृक्षत् त्विषीञ भासि अत्विक्षत् दुहँथी अदुक्षत् कृषौ अकृक्षत्। अत्र शस् प्रत्याहारो लिपिकरप्रमादकृतः अनिमइजुङ् दन्त्यसान्तधातोरसम्भवात् आलिङ्गनन्तु प्रीतिपूर्वकवक्षोहृदयसंयोगः। अश्लिक्षत् युवतीं युवा ॥६०५॥

[ ४५ ] उष दाहे ।

## ६०७। दरिद्राकासकाशजागुषो वाम् ठ्याम्।

दरिद्रा—रुषः ५।, वा ।१।, आम् ।१।, ठ्याम् ७। ।

एभ्य आम् वा स्यात् ठ्याम् ।

[ ५८३ ] भ्वस् क्रन्वाम इति ओषाम्बभूव उवोष ।

[ ४६ ] शश प्लुतगतौ ।

शशाश शशशतुः शशशिथ ।

[ ४७ ] मिह्रौ सेचने ।

[ ६०५ ] ह्रशषोऽनिमिति सक् । ( १७५ ) ह्रोढ़ोभौ अमिक्षत् ।

[ ७७ ] ढ्राढि घंस नुरिति, मेढ़ा ।

[ ४८ ] दह्रौ भस्मीकरणे ।

[१७६] दादेर्घः । [१७७] झभान्तस्येति दस्य धः अधाक्षीत् ।

[ ४९ ] चह कल्कने ।

अचहीत् [ ५७६ ] हान्तत्वान्न त्रिः ।

[ ५० ] शुच शोके ।

[ ६०६ ] शोचिता शोक्ता ॥

---

यथा सहिता सोढ़ा लोभिता लोब्धा भरिता भर्त्ता स्तविता स्तोता शोचिता शोक्ता वसलङस्तौ वसिता वस्ता तुलहत्यादौ तविता तोता अशग भोजने अशिता अष्टा रोषिता रोष्टा इषु शवाञ्छे एषिता एष्टा इषु ग्रहणात् इषुगाभीक्ष्णे इष्यसर्पणे इत्येतयोर्नित्यमेव ॥ ६०६ ॥

यथा दरिद्रामास ददरिद्र कासृ द्युतौ कासाञ्चक्रे चकाशे काशृङ कुशब्दे काशामास चकाशे जागरामास जजागार ओषाम्बभूव उवोष । मेढ़ेति मिह्रौ सेचने अन्तरङ्गतरत्वादादौ गुणे ह्रोढ़ोभाविति हस्य ढे ढभान्तयोरिति तकारस्य धे ष्टुभिरिति धस्य ढे ढ्रोढ्रीति ढस्य लोपे पूर्वस्याभावान्न दीर्घः ॥ ६०७ ॥

[ ५१ ] ग्लै हर्षक्षये ।

## ६०८ । एचोऽशित्या: ।

एच: ६।, अशिति ७।, आ: १।।

धोरेच आ: स्यादशिति । [ ५८८ ] यमरमेतीम् सनौ ॥ अग्लासीत् ।

## ६०९ । णबातो डौः ।

णप् ।१।, आत: ५।, डौ: १।।

आदन्तात् परो णप् डौ: स्यात् । जग्लौ ।

## ६१० । उस्येचीम्यखराचि लोपः ।

उसि ७।, एचि ७।, इमि ७।, अखराचि ७।, लोप: १।।

उसि एचि इमि अणोररस्याचि धोरातो लोपः स्यात् ॥ जग्लतुः जग्लुः जग्लिथ जग्लाथ ।

## ६११ । स्यादेर्ङेऽस्यो वाढ्यणौ ।

स्यादे: ६।, ङे ।१।, अस्य: ६।, वा ।१।, ढ्यणौ ७।।

स्यादेरादन्तस्य स्थावर्जस्य ङे स्याद्वा ढ्यणौ । ग्लेयात् ग्लायात् ।

---

अशितीति विषयसप्तमी तेनादौ आ: स्यात् । तत: प्रत्ययोत्पत्ति: । अतएव साम गायतीति सामग: इत्यत्र आदौ एचोऽशित्या: तत आदन्तात् हनजनाङ्गमादेरिति ड: । अरे इत्यनेनैवेष्टसिद्धौ अशितीति कथम् इति चेन्न ग्लै क्षमे इत्यस्य यङ्लुकि ढ्यणां जाग्लायात् इत्यादौ ऐकारस्य आकारानुपपत्तेः ॥ ६०८ ॥

ददरिद्रौ इति सिद्ध्यर्थं डौकरणमिति रामतर्कवागीश: । इदमतीव हास्यास्पदं बहुव्याकरणविरुद्धत्वात् ग्रन्थकारेण दरिद्र आलोप इति सूत्रं कृत्वा णपि ददरिद्र इति स्वयमुदाहृतत्वाच्च । वस्तुतस्तु डौकरणं क्वचिदेकपदेऽपि सन्धिर्न स्यादिति सूचनार्थं तेन चालनी तितउ: पुमानित्यमर: ॥ ६०९ ॥

नास्ति खर्यस्मिन् सीऽण: अणश्चासावरश्चेति अखर: तस्याच् अखराच् तस्मिन्। यथा अपुः गार्लिस्तुतौ व्यतिजगे जग्लिथ अन्तर्द्धिः अणी: किं स्यानम् अरस्य किं भान्ति अचि किं स्यात: ॥ ६१० ॥

[५२] गै शब्दे।

## ६१२। दा मा गै हाक पिव सो स्थोऽरहसि त्वयपि ङी।

दा—स्थ: ६।, अरहसि ७।, तु ।१।, अयपि ७।, ङी ।१।।

एषां क्यणी ङे स्यात् अरहसि त्वणी यप् वर्जं ङी स्यात्। गेयात्।

[५३] ध्यै संहतौ ध्वनौ।

ध्यायति।

[५४] दै प शोधने।

[५३४] पित्वान्न दासंज्ञा। अदासीत्। दायात्।

[५५] धे-ट पाने।

[२५७] ट-ईबर्थ:।

---

न च परसूत्रे स्थाग्रहणेनैव इह तस्याप्राप्तौ स्थावर्जनं कथमिति वाच्यम्। परसूत्रे स्थाग्रहणस्य अरहसि त्वयपिङीति शेषरीतिसम्बन्धेनैव सार्थकत्वे संयोगाद्यादन्तत्वेन स्थाधातोरनेन क्यणी ङे विकल्पापत्ते:। ध्येयात् ध्यायात् प्रेयात् प्रायात् स्थेयात् स्थायात् ॥ ६११ ॥

समस्तस्यासमस्तेन नित्याकाङ्क्षेण सङ्गतिरिति न्यायादणावित्यस्य ढीसम्बन्धस्यापि अरहसि इत्यनेन सम्बन्ध:। अथवा यादृग् जातीयस्य प्रतिषेधो विधिरपि तादृग् जातीयस्येति न्यायात् यप् वर्जनेनैव अणाविति लभ्यते दा इति संज्ञा देयात् धेयात् दीयते धीयते दैपशोधने इत्यस्य दायात् दायते मास्वरूपं तेन मालमाने मेयात् मीयते माङ्लिशब्दे माङ्यच मेङ् प्रतिदाने एषां मीयते। गेयात् गीयते हेयात् हीयते हाकग्रहणात् हाङ्लि हायते पेयात् पीयते पिवग्रहणात् पाल पै इत्येतयो: पायात् पायते सो इति सोय नाशे सेयात् सीयते स्थेयात् स्थीयते। यपि तु प्रदाय प्रमाय इत्यादि। अत्र अयप्रेहसि तु ङी इति कृतेऽपीष्टसिद्धौ अरहसि त्वयपिङीति कृतं तस्य क्वचिन्नित्यत्वज्ञापनार्थं तेन हानिरित्यत्र न ङी। ट ईबर्थ: इति। तेन स्तनन्धयीत्यादि ॥ ६१२ ॥

६१३। ञि श्रि स्रु द्रु कमोऽङ् घे स्यां श्वि धेट ध्वन्येल्यर्द्दूँनेस्तु वा।

ञि—कम: ५।, अङ ।१।, घे ७।, स्यां ७।, श्वि-धेट-ध्वनि-एलि-अर्द्दि-जनेः ५।, तु ।१।, वा ।१।।

अन्तादिभ्यश्चामङ् स्यात् घेऽर्थे श्वयादेस्तु वा। (५५८)

धुर्द्विरुडीति, अदधत्।

६१४। घेशाच्छासाघ्रः सेः पे लुग्वा।

घे—घ्रः ५।, सेः ६।, पे ७।, लुक् ।१।, वा ।१।।

अधात् अधासीत्।

[५६] पा पाने।

[५८७] स्यादानेति पिव। पिवति। [५५२] भूस्था पिबेति सेर्लुक्। अपात् पेयात्।

[५७] घ्रा गन्धोपादाने।

जिघ्रति। अघ्रात् अघ्रासीत्।

[५८] ध्मा शब्दाग्निसंयोगयोः।

धमति। अध्मासीत्।

[५९] ष्ठा गतिनिवृत्तौ।

तिष्ठति। न्यष्ठात्। नितष्ठौ। स्थेयात्।

[६०] म्ना अभ्यासे।

मनति।

[६१] दा-न दाने।

प्रणियच्छति। प्रयदात्। देयात्।

---

ञिश्च श्रिश्च स्रुश्च द्रुश्च कम चेति तस्मात्। श्विश्च धेटश्च ध्वनिश्च एलिश्च अर्द्दिश्च जनिश्चेति तस्मात्। यथा अञीभवत् अशिश्रियत् असुस्रुवत् इत्यादिः। अदुद्रुवत्,

[ ६२ ] ह्वृ कौटिल्ये।

### ६१५। स्याद्यर्त्यृतो णुर्यङ्यक्ठीव्यणौ स्कुस्तु ठ्याम्।

स्यादि-अर्त्ति-ऋत: ६।, णु: १।, यङ्-यक्-ठीव्यणौ ७।, स्कु: ६।, तु ।१।, ठ्याम् ७।

स्यादेरर्त्तेरृकारस्य णु: स्यात् यङि यकि ठीव्योरणौ च, स्कुस्तु ठ्यामेव। जह्वरतु:।

### ६१६। नेमृतस्थपोऽवृस्कु:।

न ।१।, इम् ।१।, ऋत: ५।, थप: ६।, अ-वृ-ऋ-स्कु: ५।।

वृ ऋ स्कु वर्जात् ऋकारान्तात् थप इम् न स्यात्। जह्वर्थ।

---

अचकमत् अशिश्वियत् अश्वयीत् व्रजवदित्यत्र जिश्वि वर्जनात् न त्रि:। अदधत् अधासीत्। ध्वनिरिति मि ध्वन रवे इत्यस्य घटादिपचे ज्ञातङ्क्षस्य ध्वनत् क तु शब्दे इत्यदन्तस्य च ग्रहणम्। अदिध्वनत् अध्वनयीत् इल ऐलयीत् ऐलिलत् अर्द आर्दयीत् आर्दिदत् ऊनिरित्यदन्तचुरादि: औनिनत् औनयीत्॥ ६१३॥

धेट पाने शोय निशाने छोय लूनौ सोयनाशे घ्रा गन्धग्रहणे एभ्य: सिलुक् स्याद्वा परस्मैपदे। अधात् अधासीत् अशात् अशासीत् अच्छात् अच्छासीत् असात् असासीत् अघ्रात् अघ्रासीत्। पिबतीति पिबादेशस्य अदन्तत्वात् न णु: लोपोऽती इत्यकारलोप:। न्यष्ठादिति भूस्था पिबेति सिलुक् गीका: स्तुस्तुभेत्यत्र अभ्यपीति षत्वम्। नितष्ठाविति दशस्यादेरिति खिव्यवधानेऽपि षत्वम्॥ ६१४॥

स्यादिश्च अर्त्तिश्च स्याद्यर्त्तौ तयोर्ऋत् स्याद्यर्त्यृत् तस्य। नास्ति णुर्यस्मिन् सोऽणु: ठीव्योरणु: ठीव्यणु:। यङ् च यक् च ठीव्यणुश्चेति तस्मिन्। अत्र व्यणुरिति ठीसाहचर्यात् कित्ठीठीपमित्यनेन कित्संज्ञस्य ठीपरस्मैपदस्यैव ग्रहणम्। तेन स्तनजस्तताविव्यस्य स्याद्यृद्वृद्धुरिति वेमले स्तृषीष्ट इत्यादौ इगुङ्मठीति आत्मनेपदस्य कित्त्वेऽपि अनेन गुणो न स्यात् स्कुरिति ससुमक्ष्च इत्यर्थ:। यथा सास्मर्यते स्मर्यते सस्मरतु: स्मर्यात्। अर्तेस्तु अरार्यते अर्यते आरतु: अर्यात्। स्कुस्तु सञ्चस्करिव। अत्र अर्ते: साहचर्यात् स्यादेरिति ऋदन्तस्यैव ग्रहणम्। तेन स्पृशशौ परीस्पृश्यते स्पृश्यते पस्पृशतु: स्पृश्यात् एषु न गुण:॥ ६१५॥

## ६१७। स्यस्यर्द्धनः।

स्यस्य ६।, ऋत्-हनः ५।।

**ऋदन्त-हन्तिभ्यां स्यस्य इम् स्यात्। ह्वरिष्यति।**

[ ६३ ] स्वृ ञ शब्दोपतापयोः।

[ ५७३ ] वेमूदितीम् वा अस्वारीत् अस्वार्षीत् सस्वरिथ सस्वर्थ।

[ ६४ ] ऋ गतौ।

## ६१८। वक्त्यस्य ख्या लिप सिच ह्वो ङो घे ञ्यां सस्तु वा लिब्भ्यस्तु मे।

वक्ति-ह्वः ५।, ङः १।, घे ७।, ञ्यां ७।, सः ५।, तु ।१।, वा ।१।, लिब्भ्यः ५॥, तु ।१।, मे ७।।

**वक्त्यादेर्घेऽर्थे ङः स्यात् ञ्यां, सृऋभ्यान्तु वा लिपादेस्तु मे वा स्यात्।**

---

ह्रश्च ऋश्च सृश्च ते, न विद्यन्ते ह्रऋसृकारौ यत्र सोऽह्रसः तस्मात्। यथा ग्टह्म-सेके जगर्थ जघर्थ प्रादेस्तु ववरिथ नेमसुमित्यादिना ह्रधातौ छीमातस्य इम् निषेधेऽपि अत्र ह्रग्रहणात् थप इम्। ववरिथ सञ्चस्वारिथ वेमूदिदित्यत्र स्वरग्रहण-ज्ञापकात् स्वृञशब्दोपतापयोरित्यस्य सस्वरिथ सस्वर्थ इति स्यादेव॥ ६१६॥

करोतीत्यादीनां नेमेकाजिति निषेधादप्राप्तौ स्वृञशब्दोपतापयोरित्यस्य वेमोऽपि नित्यार्थं विधानम्। करिष्यति स्वरिष्यति हनिष्यति॥ ६१७॥

वक्तिरिति वच्लौ वाचि। अस्य इति असु इर् क्षेपे। वक्तिश्च अस्यश्च ख्याश्च लिपश्च सिचश्च ह्वाश्च तस्मात्। सृश्च ऋश्च स तस्मात्। लिब्भ्य इति बहुवचनं गणार्थम्। तेन लिपसिचह्वाभ्य इत्यर्थः। यथा अवोचत् आस्थत् असतेः परस्मैपदे ङः सिद्ध एव इहोपन्यासस्तु आत्मनेपदप्राप्त्यर्थः। तेन गीर्वाणोऽहीढे चेत्यात्मनेपदे निरास्थत आख्यत् अलिपत् असिचत् अह्वत् असरत् आरत् इयोर्णुरिति णः पक्षे असार्षीत् आर्षीत् लिपादेस्तु अलिपत अलिप्त असिचत असिक्त अह्वत अह्वास॥ ६१८॥

## ६१९। दृश्रोर्णुः।

दृश्रोः ६॥, णुः १।।

दृशेर्ऋवर्णान्तस्य च णुः स्यात् ङे। असरत् असार्षीत्।

## ६२०। ऋद्रिः शयक्ढीपे।

ऋत् ।१।, रिः १।, श-यक्-ढी-पे ७।।

स्रियात्।

[ ६५ ] ऋ गतौ।

ऋच्छति। आरत् आर्षीत्। आर, आरतुः, आरिथ। अर्यात्।

[ ६६ ] श्रु श्रवणे।

## ६२१। श्रोः शृर्घे रे जिश्च।

श्रोः ५।, श्रृ : १।, घे ७।, रे ७।, जिः १।, च ।१।।

श्रुवो घेऽर्थे शृः स्यात् रे, श्रुवश्च जिः। शृणोति शृणुतः शृण्वन्ति।

## ६२२। नूपोऽस्यस्योल्लोपो व्मि वा।

नूपः ६।, अस्यस्य ६।, उल्लोपः १।, व्मि ७।, वा ।१।।

अस्यस्य नो-रूपश्च उकारस्य वा लोपः स्यात् वमयोः परयोः। शृण्वः शृणुवः शृण्मः शृणुमः।

[ ५४७ ] ह्रेर्लोपोऽस्येति, शृणु शुश्रुव।

---

अदर्शत् आरत् अजरत् ॥ ६१९ ॥

शश्च यक् च ढीपश्च तस्मिन्। आद्रियते क्रियते क्रियात्। आरतुरिति स्याद्यर्त्यृ त इति णुः। आरिथेति सृजदृशील्यत ऋवर्जनात् न वेम्। अर्यादिति स्याद्यर्त्यृ त इति णः ॥ ६२० ॥

शृण्वन्तीति ष्नु र्वं इति वत्वं श्रु ध्वीरिति वः ॥ ६२१ ॥

नुश्च उप् चेति तस्य। न स्योऽस्यः तस्य। उत लोपः उल्लोपः। व च म च व्म तस्मिन् शृण्वः शृणुवः शृण्मः शृणुमः तन्वः तनुवः तन्मः तनुमः शृणोमि तनोमीत्यादौ लोपस्वरादेशयोः स्वरादेशविधिर्बलवानिति न्यायात् गुण एव। संयुक्तनूपोस्तु आप्नुवः आप्नुमः तृणदुज्ञ अचि नौप्सुङोणुर्वेति गुणे तर्णुवः तर्णुमः श्रुश्रुवेति नेमसुमिति नियमात् न इम् ॥ ६२२ ॥

[ ६७ ] सु गतौ।

## ६२३। सुस्तुधोः सेरिम् पे।

सु स्तु-धोः ५।, सेः ६।, इम् ।१।, पे ७।।

असावीत्। सुषविथ सुषुविव। सविता सोता।

[ ६८ ] स्रु गतौ।

[ ६१२ ] जिश्रीत्यङ्। असुस्रुवत्। सुस्रोथ, सुस्रुव।

[ ६९ ] दु गतौ।

अदावीत् अदौषीत्, दुदुविव।

[ ७० ] द्रु गतौ।

अदुद्रुवत्। दुद्रुव।

[ ७१ ] गम्लौ गतौ।

गच्छति [५६५] लिदित्त्वात् ङः, अगमत्। जगाम।

(२३०) हनगमेत्युङ्लोपः, जग्मतुः जग्मुः। जगमिथ जगन्थ।

## ६२४। गमोऽमे स इम् मार्हात्तु वा।

गमः ५।, अमे ७।, सः ६।, इम् ।१।, मार्हात् ५।, तु ।१।, वा ।१।।

गमः परस्य सस्य इम् स्यात् न तु मे, मयोग्यात्तु वा। गमिष्यति।

---

वेमूदित्यनेन वेमत्वे नित्यार्थं सुग्रहणम्। एकाजुदन्तत्वेन निषेधे स्तु धोर्ग्रहणम्। असावीत् अस्तावीत् अधावीत् पे किम्? असोष्ट असविष्ट अस्तोष्ट अधोषातां रुदसुनोस्तव्या इत्युक्तेः सुषुविव सुषविथ उभयत्र नित्येम् सोता सविता इति वेम्। थयोर्येति नेमसुमिति नियमेन सृजदृशेत्यस्य बाधितत्वात् नेम्। रुदुसुनोस्तव्या इत्युक्तेः अदावीत् अदौषीत् दुदुविव दुद्रुव इति नेमसुमिति नियमात् नेम्। जगमिथ जगन्थेति सृजदृशेति वेम्॥ ६२३॥

गमिष्यति जिगमिषति जिगमिषुः मे तु गंस्यते ग्रामस्तेन। मम् आत्मनेपद-मर्हतीति मार्हः। समो गम्यृच्छेत्यादिना आत्मनेपदविधानात् सञ्जिगमिषुः सञ्जिगंसुः। मार्हात् सेप वा इत्येके सङ्गंस्यते सङ्गमिष्यति अद्यपदिति लृदित्त्वात् ङः। क्षमदृशेति सौ वर्द्रोऽकिदिति च्यद्रो वा असासीत् अस्रासीत्॥ ६२४॥

[ ७२ ] ष्टृप्लौ गतौ।

असाप्सीत् असार्प्सीत् असृपत्।

[ ७३ ] स्कन्दिरौ गति-शोषणयोः।

६२५। विस्कभ्ना-निर्वं-वि-सु-निर्दुः स्वपः सः षो, निनिर्विं स्फुर स्फुल परिविस्कन्दाऽप्राणि-घ-निपरिनिर्व्यभ्यनु-स्यन्दस्तु वा।

विस्कभ्ना—स्वपः ६।, सः १।, षः १।, नि-निर्-स्यन्दः ६।, तु।१।, वा।१।।

विस्कभ्नातिर्वं-वर्जं-व्यादिपूर्वस्य स्वपश्च सः षः स्यात् न्यादि-पूर्वं-स्फुर-स्फुलोः परि-वि-स्कन्दतेः अप्राणिघ-न्यादिपूर्वस्य स्यन्द-तेश्च स्याद्वा। परिष्कन्दति परिस्कन्दति।

[ ७४ ] तॄ प्लवन-तरणयोः।

६२६। ॠतो गुः कित् ठ्याम्।

ॠतः ६।, गुः १।, कित्-ठ्याम् ७।।

तेरतुः।

---

वेःस्कभ्ना विश्च सुश्च निर् च दुर् च तेभ्यः स्वप् निर्गतौ वौ यस्य स निर्वं: निर्वश्चासौ विसुनिर्दुः स्वप् चेति निर्वविसुनिर्दुः स्वप्विस्कभ्नाश्च निर्वविसुनिर्दुः स्वप् च तयोः। निश्च निर् च विश्च ते तेभ्यः स्फुरस्फुलौ निनिर्विंस्फुरस्फुलौ परि-विभ्यां स्कन्द परिविस्कन्दः निश्च परिश्च निर् च विश्च अभिश्च अनुश्च ते तेभ्यः स्यन्द निःपरिनिर्व्यभ्यनुस्यन्द अप्राणी घो यस्य सोऽप्राणिघः स चासौ निपरि-निर्व्यभ्यनुस्यन्द चेति अप्राणिघनिपरिनिर्व्यभ्यनुस्यन्द निनिर्विंस्फुरस्फुलौ च परि-विस्कन्दश्च अप्राणिघनिपरिनिर्व्यभ्यनुस्यन्द चेति। तस्य। यथा विष्कभ्नाति। निस्फुलति निष्फुलति, एवं निर्विभ्याम्। परिस्कन्दति परिष्कन्दति विष्कन्दति विस्कन्दति निष्यन्दते निस्यन्दते घृतं चरतीत्यर्थः। एवं परि निर् वि अभि अनुभ्यः। अप्राणिघः किं निस्यन्दते हस्ती मदं मुञ्चतीत्यर्थः॥ ६२५॥

किच्चासौ ठी चेति कित् ठी तस्याम्। तेरतुरिति अनेन गुणे तॄफलेति अकारस्य एकारः खिलोपश्च। दीर्घ-ॠतः इति किम्? चक्रतुः॥ ६२६॥

## ६२७। वृतो वेमो घोंऽठीढीपसेः।

वृ-ॠतः ५।, वा ।१।, इमः ६।, घः १।, अ-ठी-ढी-प-सेः ६।।

वृङो वृञ ॠदन्ताच्च इमो घः स्याद्वा, न तु ठ्याः ढ्याः पसेश्च। तरीता तरिता। ठीढीपसेस्तु तेरिथ। तरिषीष्ट, अतारिष्टाम्।

## ६२८। ॠदिरणावुर्वोष्ठ्यात्।

ॠत् ।१।, इर् ।१।, अणौ ७, उर् ।१।, तु ।१।, ओष्ठ्यात् ५।।

ॠकार इर् स्यादणौ, ओष्ठ्यात् परस्तु उर्। तीर्य्यात्।

[ ७५ ] षन्जौ ञि सङ्गे।

## ६२९। षन्जदन्शष्वन्जोऽपि न लोपः।

षन्ज-दन्श-ष्वन्ज ६।, अपि ७, न-लोपः १।।

निषजति। न्यषाङ्क्षीत् निषषञ्ज ससजतुः ससञ्जतुः।

[ ७६ ] दृशिरौ प्रेक्षणे।

पश्यति। अदर्शत्। [ ६०४ ] वद्रोऽकिदिति। अद्राक्षीत्।

[ ५८९ ] सृजदृशेतीम् वा, ददर्शिथ दद्रष्ठ।

[ ७७ ] दन्शौ दंशने।

अदाङ्क्षीत्।

---

वृश्च ॠच्च वृत् तस्मात्। पि सिः पसिः ठी च ढी च पसिश्चेति न ठीढीपसिः अठीढीपसिः तस्य। वृं इति वृञोर्ग्रहणं वरिता वरीता वरिष्यते वरीष्यते तरीता तरिता। ठीढीपसेस्तु ववरिथ वरिषीष्ट अवारिषातां तेरिथ तरिषीष्ट अतारिष्टाम्॥ ६२७॥

पीरित्यनेनैवेष्टसिद्धौ ओष्ठ्यादिति कृतं दन्त्यवकारस्यापि प्राप्त्यर्थम्। तेन वृणोतेः सनि वुवूर्षतीत्यत्र घोंऽज्झनिङ्गमामिति दीर्घे ओष्ठ्यपरत्वादुर्। तीर्य्यादिति व्यन्यचतयीति दीर्घः। एवं तीर्य्यते तितीर्य्यति तेतीर्य्यते निस्तीर्य्य ओष्ठ्यात्तु पृ पूर्य्यात् वृगि वूर्य्यात् भृगि भूर्य्यात् मृगि मूर्य्यात्। दन्त्यवात्तु वृगिञ वूर्य्यात्। ओष्ठ्यादिति धात्ववयवादेव। तेन सम्पूर्वस्य ॠगि गत्यामित्यस्य समीर्य्यादित्येव॥ ६२८॥

[ ७८ ] कित निवासे रोगापनयने संशये च।

६३०। **कित्तिज्गुपः सन्निम् मान शान दान बधस्तु खेङीं च।**

कित्-गुपः ५।, सन् ।१।, न ।१।, इम् ।१।, मान—बधः ५।, तु ।१।, खेः ६।, ङी ।१।, च ।१।।

**कितादेः सन् स्यात् इम् न स्यात्, मानादेस्तु खेङीं च।**
**क्रमादेतेऽत्र सन्देहे चान्तिनिन्दाविचारणे।**
**निशानार्जवनिन्दासु रुग्जयेऽपि कितो मतः।**

---

षन्जौञि सङ्गे दन्शस्वरूपं ष्वन्जौञिङालिङ्गे एषां नस्य लोपः स्यादपि परे। एभ्योऽपकिदित्यनेनैवेष्टसिद्धौ शप्येषां नलोपविधानं कथमिति चेत् न। दंशि कङ दंशे इति इदनुबन्धात्मनेपदिचुरादेर्ञेरनित्यत्वपचे दशते इत्यादौ शपः कित्त्वेऽपि इदित् धातोर्नलोपनिषेधे नलोपानुपपत्तेः। चुरादेर्ञेरनित्यत्ववीजं धातुदीपिकायाम् अकिक्लक्षणीत्यव द्रष्टव्यम्। सजति दशति स्वजते निषजति गीक इति षत्वं न्यषाङ्क्षीदिति अनिमत्वात् वृद्धिः अभ्यपीति षत्वं निषषञ्ज इति दशस्यादेरिति द्वयोः षत्वम्। ससजतुः ससञ्जतुरिति स्यात् ठ्यपिदिति कित् पचे न लोपः। अदशदिति इरित्वात् ङे दृशीरिति गुः। अदाङ्क्षीदिति अनिमत्वात् वृद्धिः अभ्यपीति षत्वम्॥ ६२९॥

कित् संशयेच्छावासारोग्येषु तिजङ् चान्तौ निशाने गुपङ्गोपनकुत्सयोः मानङ् विचारेऽर्थे शानङ् चान्तौ निशाने दानआर्जवे छिदि बधङ् निन्दे बन्धे। क्रमादेतेऽत्रेति। अत्र सन् विधाने एते कितादयः सप्त क्रमात् सन्देहादिसप्तस्वर्थेषु मताः। कितो रुग्-जयेऽपि मतः। कित सन्देहरुग्जययोः। तिजङ् चान्तौ गुपङ् निन्दायां मानङ् विचारणे शान अनिशाने दानङ् आर्जवे बधङ् निन्दायामित्यर्थः। सन्देहो विरुद्धानेककोटिविषयज्ञानं तत्राकर्म्मकः शास्त्रे चिकित्सति छात्रः रुग्जयो रोग प्रतीकारः। चिकित्सत्यातुरं वैद्यम्। चान्तिःसहनं तितिचते दुःखं तपस्वी। निन्दादोषवत्तयाख्यानं जुगुप्सते व्याधं साधुः। विचारणम् इदमित्थं न वेति प्रमाणानुसन्धानम्। मीमांसते धर्म्मं धीरः। निशानं तीच्णाकरणं शीशांसति खड्गं कर्म्मकारः। आर्जवमकुटिलीभावः दीदांसति साधुरकुटिलो स्यात् इत्यर्थः।

## ६३१। सन्ञ्याद्यिर्धुः।

सन्-ञ्यादिः १।, धुः १।।

**सनन्तो ञ्याद्यन्तश्च धुसंज्ञः स्यात्।**

## ६३२। सन्यङन्तो द्विः।

सन्-यङ्-अन्तः १।, द्विः १।।

**चिकित्सति। अचिकित्सीत् चिकित्सामास।**

**इति पवत्-पादः।**

---

निन्दा उक्ता बीभत्सते व्याधं साधुः। सन्देहादिभ्योऽन्येष्वर्थेषु केतति इत्यादि स्यादिति वोपदेवः। तेषु तिबादयो न प्रयुज्यन्ते क्तप्रत्यया एवेति केचित्। काङ्गणभानत्कारश्च किं गोपसे इत्यादयोऽपि दृश्यन्ते ॥ ६३० ॥

ञ्यादिश्च ञि सन् यङ् काम्यक् क्य ङ्य क्वि इति सप्त। यथा रोचयति बुभूषति बोभूयते पुत्रकाम्यति ज्ञानीयति कृष्णायते कृष्णति ॥ ६३१ ॥

सन् च यङ् च सन्यङौ तावन्ते यस्य स सन्यङन्त इति तद्गुणसंविज्ञानबहु-व्रीहौ सन्यङ्समेतो द्विः स्यात्। यथा बुभूषति बोभूयते। अजादेस्तु आदिवर्णं हित्वा द्वित्वे अटिटिषति अटाट्यते एवं इष गतौ इषिषिषति उङ् शब्दे उषिषि-षते। कदाचित्तद्गुणसंविज्ञानबहुव्रीहौ केवलो धातुरपि द्विः। तेन मोक्षते इत्यत्र सनं हित्वा मुचधातोर्द्वित्वे मुचोऽदेवेर्मोच् वेति मोचादेशः। चिकित्सतीति कित् सन् अनेन इम् निषेधे गुर्नामिसीति वक्ष्यमाणात् गुणनिषेधे चिकित्स इति भागस्य धातुसंज्ञायां द्वित्वादि तिप्शपौ च चिकित्सामासेति त्यान्तत्वादाम् ॥ ६३२ ॥

पवतां परस्मैपदिनां पादः प्रकरणमित्यर्थः।

इति पवत्-पादः।

---

[ ७९ ] एधङ वृद्धौ ।

एधते । ऐधिष्ट । एधाञ्चक्रे ।

[ ८० ] ददङ दाने ।

[ ५७९ ] अशशददेत्युक्तेः, दददे ।

[ ८१ ] ष्वक्क ङ सर्पणे ।

[ ५६९ ] अ-ध्यै ष्वक्केत्युक्तेः, ष्वक्कते । षष्वक्के ।

[ ८२ ] ऋज ङ आर्ज्जवे । आनृजे ।

[ ८३ ] तिजङ क्षमा-निशानयोः ।

तितिक्षते ।

[ ८४ ] ष्वन्जी ङ सङ्गे ।

निष्वजते ।

## ६३३ । निविपरिस्वन्जस्तु सुमादेः सः षोऽमि वा ।

नि-सुमादेः ६।, सः १।, षः १।, अमि ७।, वा ।१। ।

**न्यष्वङ्क्त । न्यस्वङ्क्त । सस्वजे सस्वञ्जे ।**

---

ष्वक्कङ । अध्यैष्वक्केत्युक्तेर्न दन्त्यादेशः । ष्वक्कते षष्वक्के षिष्वक्कियते षाष्वक्क्यते । चतुर्भुजस्तु इमं पञ्चमस्वरिणं मत्वा षुक्कते षुषुक्के षुषुक्किषते षुषुक्क्यते इत्युदाहरति । निष्वजते इति सन्जदन्शेति नलोपे गीक इति षत्वम् ॥ ६३२ ॥

सुम् आदिर्यस्य स सुमादिः । स्वन्जश्च स्तुश्च सुमादिश्चेति । निविपरिभ्यः स्वन्जस्तु सुमादिः निविपरिस्वन्जस्तु सुमादिः सुमादिश्च गीक इति सूत्रे पठिताः सुमागम सिवसहः निविपरिभ्यः परेषामेषां सस्य षः स्यात् वा अम् व्यवधाने । न्यष्वङ्क्त न्यस्वङ्क्त व्यष्टावीत् व्यस्तावीत् पर्य्यष्कार्षीत् पर्य्यस्कार्षीत् न्यषेवीत् न्यसेवीत् व्यषहत व्यसहत । सस्वजे इत्यादि स्यात् ठ्यपिदिति कित् पक्षे न लोपः ॥ ६३३ ॥

## ६३४। सत्स्वञ्जोष्ठ्यां नाखेः।

सद्-स्वञ्जोः ६॥, ठ्यां ७, न ।१।, अखेः ६।।

खिवर्जस्थानयोः सः षो न स्यात् ठ्याम्। विषस्वजे विषस्वञ्जे।

[ ८५ ] त्रपूषङ् लज्जायाम्।

अत्रपिष्ट अत्रप्त। त्रेपे।

[ ८६ ] जभङ् जम्भने।

## ६३५। नुण् जभोऽचि।

नुण् ।१।, जभः ६।, अचि ७।।

अजम्भिष्ट।

[ ८७ ] ष्टुभङ स्तम्भे।

विष्टोभते व्यष्टोभिष्ट।

[ ८८ ] पणङ व्यवहारे स्तुतौ च।

[ ५८१ ] कम ऋतेत्यायः। पणायते।

## ६३६। सनः पमे धोर्वा त्वायात्।

सनः ५।, पमे १॥, धोः ६।, वा ।१।, तु ।१।, आयात् ५।।

पणायति। अपणायिष्ट अपणिष्ट। पणायाञ्चक्रे पेणे।

---

सद् च स्वन्ज च सद्स्वन्जौ तयोः न खिरखिः तस्य अखेः। विषसाद विषस्वजे। ठ्यामिति किं विषाष्वज्यते इत्यादौ दणस्यादेरित्युक्तेरुभयोः षत्वम्॥ ६३४॥

जभो नुण् स्यात् अचि परे प्रकरणबलात् जभङ् जम्भे इत्यस्यात्मनेपद एवेति बोध्यम्। जम्भते अजम्भिष्ट जम्भनं जम्भः जभि जभ जभने इत्यस्य परस्मैपदिनस्तु जभति जभिष्यते जभनम्। विष्टोभते गीका इति षत्वं व्यष्टोभिष्टेति अस्यपीति षत्वम्॥ ६३५॥

सनः सनन्तात् मूलधातोः सम्बन्धिनौ पमौ स्याताम्। यथा बुभूषति पिस्पर्द्धिषते चिकीर्षति चिकीर्षते आयात्तु वा पणायति पणायते अयस्यानुबन्धैर्नैवेष्टसिद्धौ

## ६३७ । विच्छास्तुतिपणो वायः ।

विच्छ—अस्तुतिपण: ५।, वा ।१।, आय: १।।

पणायते पणते ।

एवं [ ८८ ] पन ज्ञीड़े ।

[ ९० ] कमुङ कान्तौ ।

कामयते । [ ६१२ ] अग्रन्तत्वादङ् ।

## ६३८ । ञाड्युङ: स्वोऽनग्लोपि शास्वृदित: ।

ञाङि ७, उङ: ६।, स्व: १।, अनग्लोपि—शासु ऋदित: ६।।

अनग्लोपिन: शासोऋ कारितश्चान्यस्य उङ: स्व: स्यात् ञ: परे अङि परे ।

---

आयात् तु वेति क्रतं वृद्धेरप्राप्त्यर्थं फलवत् कर्त्तरि परस्मैपदार्थमफलवत् कर्त्तर्थ्यात्मनेपदार्थञ्च ॥ ६३६ ॥

न स्तुतिरस्तुति: अस्तुतौ पण् अस्तुति पण् विच्छश्च अस्तुति पण् चेति तस्मात् । विच्छश्च गतावित्यस्मादस्तुत्यर्थमूर्द्धन्यान्तपणश्चाय: स्याद्वा । स्तुतिवर्जनात् व्यवहारार्थे इत्यर्थ: । व्यवहारश्च क्रयविक्रयस्वरूप: । विच्छायति विच्छायते विच्छति पणायते पणायति पणते । एवं पन इति पनङीड़े इति दन्त्यान्तस्यापि कम ऋत इत्यादि पनायति पनायते इत्यादिकं बोध्यमित्यर्थ: ॥ ६३७ ॥

ञ: परोऽङ् ञाङ् तस्मिन् । अकी लोप: अग्लोप: सोऽस्यास्तीति अग्लोपी । ऋत् इत् यस्य स ऋदित् । अग्लोपी च शासुश्च ऋदिच्चेति न अग्लोपिशास्वृदित् अनग्लोपिशास्वृदित् तस्य । यथा अपीपठत् अदीदवत् अबूबुधत् । अग्लोप्यादेस्तु । कूटल्कादाहे सन्वे इत्यदन्तात् चुर्भ्यौरिति ञौ हसाल्लोप इत्यकारलोपे अग्लोपित्वात् न ह्रस्व: अचुकूटत् अशशासत् अडुढौकत् । ओणृ अपसारणे इत्यस्य ऋदनुबन्धो ज्ञापयति ञाङि आदौ ह्रस्व: पश्चात् द्वित्वमिति । अन्यथा आदौ द्वित्वे दीर्घाङोऽभावादेव ह्रस्वासम्भवे ऋदनुबन्धो व्यर्थ: स्यादिति । मा भवान् औणिणत् अतएव मा भवान् अटिटत् इट मा भवान् इटिटत् उष मा भवान् उषिषत् इत्यादीनां ञौ आदौ वृद्धौ गुणे वा क्रते अनेन ह्रस्वे पश्चात् द्वित्वे मायोगादमागमाभावे तद्रूपेण स्थितिरिति । अत्र केवलेऽङि दीर्घाङोऽभवादेव ञ: परेऽङीति लब्धे ञिग्रहणं

## ६३९। खेः सन्वद्धौ घोर्हसादेर्घश्च, ल्यनेकाचोस्त्वकलिहलेर्वा।

खेः ६।, सन्वत् ।१।, घौ ७।, घोः ६।, हसादेः ६।, र्घः १।, च ।१।, ल्यनेकाचोः ६॥, तु ।१।, अकलिहलेः ६।, वा ।१।।

**अनग्लोपिनः खेर्घौ घ्वच्चरे परे सन्वत् कार्य्यं स्यात् ञाङि, घोश्च खेर्हसादेः र्घः स्यात्, कलि-हलि-वर्जस्य लेः अनेकाचश्च सन्वत् वा स्यात्।**

---

सामान्यार्थम्। तेन वादितवन्तं प्रयोजितवान् अवीवदद्वीणां गायनेन राजा इत्यत्र पुनर्ञौ कृते पूर्वञेर्लोपेऽपि अनग्लोपित्वात् ह्रस्वः स्यादेव इति काशीश्वरः। वस्तुतस्तु केवलेऽङि उक्ते परत्वानुवृत्तौ अचकमत इत्यत्रापि सन्वत् भावाद्यापत्तिः॥ ६३८॥

सन् इव सन्वत् लिश्च अनेकाच्च तौ तयोः कलिश्च हलिश्चेति कलिहलि न कलिहलि अकलिहलि तस्य। अनग्लोपि शास्वृदितौ अनुवृत्तावपि खेः परस्य शास्वृदितोर्लोघवे सम्भवात् चकारेण ङ् दीप्ताविल्यस्य ऋदितोऽपि अनेकाचत्वात् विशेषेण कल्पेन बाधितत्वात् अनग्लोपिन इत्येव व्याख्यातम्। ञे परेऽङ्परे सति अनग्लोपिधातोः खेः सन्वत् कार्य्यं स्यात् खेः परे लघुधात्वच्चरे सति। तत्रैव यदि हसादेर्धातोः खिर्लघुर्भवति तदा तस्य दीर्घश्च स्यात्। कलिहलिवर्जस्य लेरनेकाच्धातोश्च खेर्लघुधात्वच्चरे परे सन्वत् कार्य्यं स्याद्वा। सन्वद्भावपक्षे हसादिसम्बन्धी खिर्यदि लघुर्भवति तदा र्घः स्यादित्यर्थः। अत्र केवलस्य लघोरसम्भवात् लघुयुक्तस्य हसो ग्रहणम्। यथा अपीपचत् असीषिचत् अमूमुहत् अचीकरत्। अग्लोपिनस्तु कलत्कगतिसंख्ययोः। अचकलत्। घौ घ्वच्चरे किं अररम्भत्। हसादेः किं औन्दिदत्। लघोः खेः किं ध्वन अदिध्वनत्। लेस्तु कृतयति अचीकृतत् अचकृतत्। कविमाख्यातवान् अचीकवत् अचकवत् पटुमाख्यातवान् अपीपटत् अपपटत् कलिहलिवर्जनात् लेरग्लोपित्वेऽपि स्यात्। इवर्णौ वर्णाभ्यामन्यस्य लिङ्गस्य सन्वद्भावो नास्तीति जौमराः। कलिहल्योस्तु अचकलत् अजहलत्। अनेकाचस्तु अचीचकासत् अचचकासत्॥ ६३९॥

## ६४०। ख्यस्येत् सनि।

ख्यस्य ६।, इत् ।१।, सनि ७।।

खेरवर्णस्य इत् स्यात् सनि परे।

## ६४१। ञेर्लोपोऽनाल्विष्ण्वाय्यान्तेत्न्वामिम्शिति।

ञे: ६।, लोप: १।, अनालु—शिति ७।।

आलु इष्णु आय्य अन्त इत्नु आम् इम् शित् एभ्योऽन्यत्र ञेर्लोप: स्यात्।

अचीकमत अचकमत। कामयाञ्चक्रे चकमे।

[९१] अयङ गतौ।

आयिढ्वम् आयिध्वम् आयिढम्। अयाञ्चक्रे।

एवं [९२] दयङ गतौ।

[९३] स्फायीङ वृद्धौ।

अस्फायिष्ट।

---

खेर: ख्य: तस्य ॥ ६४० ॥

आलुश्च इष्णुश्च आय्यश्च अन्तश्च इत्नुश्च आम् च इम् च शिच्च ते। न विद्यन्ते ते यत्र स: तस्मिन्। यथा भाव्यते बोध्यते इत्यादिषु यकि ञेर्लोपे त्यलोपे त्यलक्षण-मिति न्यायात् वृद्धिगुणौ स्त एव। आल्वादौ तु स्पृहयालु: कारयिष्णु: स्पृहयाय्य: मण्डयन्त: स्तनयित्नु: कारयामास कारयिष्यति कारयति अचीकमतेति कम ञिङ् वृद्धि: कामि इत्यस्य धातुसंज्ञा तन् अङ् ञाऽङुङ् ह्रस्वे कमि इत्यस्य द्वित्वे मि इत्यस्य लोपे कस्य च खि: सन्वदिति सन्वत्त्वात् ख्यस्येत् सनीति अकारस्य इकारे घीश्च खेर्हसादर्घश्चेति तस्य दीर्घेऽनेन ञेर्लोप: अचकमतेति वारे इति ञिङोऽप्राप्तिपक्षे ञिश्रीत्यङ्। अयङ् गतौ अयधातौ परे निर्दु: प्रतिवर्जस्य उपसर्गस्य रेफो न स्यादिति वक्तव्यम्। प्लायते पलायते पल्ययते निर्दु: प्रतीनान्तु निरयते दुरयते प्रत्ययते। आयिढ्वमिति अयध्वं ध्यां सि: इम् धे: स लोपो वा टीठौढीष इति धस्य ढो वा पक्षे तद्रूपस्थिति:। सस्य स्थितिपक्षे झप्झसोरिति सस्य द:। अयाञ्चक्रे विंजादीत्याम्। अस्फायिष्टेति वेमूदितीम् वा ॥ ६४१ ॥

६४२। य्वोर्लोपो हस्यये।

य्वोः ६॥, लोपः १।, हसि ७।, अये ७।।

अस्फास्त।

[ ९४ ] ओ प्यायी ङ वृद्धौ।

६४३। पदस्तनीण् घे प्याय ताय दीप पूर जन बुधस्तु वा।

पदः ५।, तनि ७।, इण् ।१।, घे ७।, प्याय—बुधः ५।, तु ।१।, वा ।१।।

पदो घेऽर्थे इण् स्यात् तनि, प्यायादेस्तु वा।

६४४। इणस्तन् लोप्यः।

इणः ५।, तन् ।१।, लोप्यः १।।

अप्यायि अप्यायिष्ट अप्यास्त।

६४५। प्यायः पीर्यङ्ठ्योः।

प्यायः ६।, पीः १।, यङ्-ठ्योः ७॥।

पिप्ये।

[ ९५ ] तायृङ् सन्तानपालनयोर्गतौ च।

अतायि अतायिष्ट।

---

य च व च य्वौ तयोः। वकारो दन्त्यः। अस्फास्तेति अनिम् पत्रे यलोपः। एवं स्फाता प्याता। दिव्यु यङ्लुकि ऊटो अप्राप्तिपक्षे देदेति देदितः हसि किं स्फायते सेवते अयि किं पलाय्यते दीव्यति॥ ६४२॥

णित्वात् वृद्धिः। अपादि अप्यायि अप्यायिष्ट अतायि अतायिष्ट अदीपि अदीपिष्ट अपूरि अपूरिष्ट अजनि अजनिष्ट अबोधि अबुद्ध॥ ६४३॥

इण इति सामान्यार्थं तेन रतनोर्यगिणाविव्यनेन कृतादिणोऽपि तनो लोपः। ननु तनस्थाने इण् करणेनैवेष्टसिद्धौ तनि परे इणं कृत्वा तल्लोपविधानगौरवं कथमिति चेत् सत्यं तनस्थाने इणि कृते व्यां सेरापत्तिः तनस्थाने जातत्वेन ङित्वात् अबोधीत्यादौ गुणाभावश्च॥ ६४४॥

[ ९६ ] शलङ चलने ।

अशलिढ्वम् अशलिध्वम् अशलिड्ढम् ।

[ ९७ ] षेवृङ सेवने ।

परिषेवते, न्यषेविष्ट, विषिषेवे । प्रतिसेवते ।

[ ९८ ] काशृङ दीप्तौ ।

काशामास चकाशे ।

एवं [ ९९ ] काशृङ कुशब्दे ।

[ १०० ] ईहङ चेष्टायाम् ।

ऐहिढ्वम् ऐहिध्वम् ऐहिड्ढम् ।

[ १०१ ] रु ङ वधे गत्याम् ।

अरविष्ट अरोष्ट । रुरुविषे ।

[ १०२ ] दे ङ पालने ।

## ६४६ । द्वेर्देङो दिगिष्ठ्याम् ।

द्वेः ६।, देङः ६।, दिगिः १।, ठ्याम् ७।

द्विरुक्तस्य देङो दिगिः स्यात् ठ्याम् । दिग्ये ।

[ १०३ ] ओडीङ नभोगतौ ।

अडयिष्ट ।

---

पिप्ये स्न ध्वोरिति यः । यङि पेपीयते यङ्लुकि पेपेति पेपीतः अशलिढ्व-मित्यादि धे सलोपपक्षे ढौ वा पक्षे सस्य दः । परिषेवते परिनिविसेविति षत्वम् । न्यषेविष्टेति अत्यपीति षत्वम् । विषिषेवे इति दमास्थादेरिति षत्वम् । एभ्यः किं प्रतिसेवते काशामासेति दरिद्राकाशेत्यामि असोऽनुप्रयोगे वक्तव्यात् आत्मनेपदस्य परस्मैपदादेशः । ऐहिढ्वमित्यादि सुगमम् अरोष्टेति रुदुसुनोत्स्वठ्या इति इमोऽभावपक्षे लोपस्वरादेशयोस्तु स्वरादेशो विधिर्बलवानिति न्यायादादौ गुणे ऋस्वपरत्वाभावापन्न सिलोपः । रुरुविषे इति रुङ् ठ्याः से द्वित्वं रुदुसुनोरिति ठीवर्जनात् नेमसुमिति नियमेन नित्यमिम् स्न ध्वोरित्युव् ॥ ६४५ ॥

[ १०४ ] गुपङ गोपन-कुत्सनयोः। जुगुप्सते।

[ १०५ ] मानङ विचारे। मीमांसते।

[ १०६ ] बधङ निन्दायाम्। बीभत्सते।

[ १०७ ] द्युतङ ऌ दीप्तौ।

[ ५६५ ] शासुलिद्युदिति ङः तेनैव पम्। अद्युतत् अद्योतिष्ट।

## ६४७। द्युत्स्वाप्योः खेर्जिः।

द्युत्-स्वाप्योः ६॥, खे ६।, जिः १।।

दिद्युते। [ १०८ ] वृतङ वृ ऌ वर्त्तने।

## ६४८। वृद्भ्यो नेम् पे स्यसनोर्वा त्वमे।

वृद्भ्यः ५॥, न ।१।, इम् ।१।, पे ७।, स्य-सनोः ६॥, वा ।१।, तु ।१।, अमे ७।।

वृतादेः स्य-सनोः इम् न स्यात् पे, मादन्यत्र तु वा। अत-एव पम्। वर्त्स्यति। मे तु, वर्त्तिष्यते।

[ १०९ ] स्यन्दूङ वृ ऌ स्रवणे।

निष्यन्दते निस्यन्दते घृतम्। निस्यन्दते हस्तीति प्राणि-त्वान्न षः।

---

सुगमम्। जुगुप्सत इति किच्चिजेति सन्। बीभत्सत इति]बधस्तेनैव सनि खेर्डौ च भभान्तस्येति बस्य भः। द्युतङ् तेनैव पमिति द्युतादेरिष्टौपेङ्विधानसामर्थ्यात् ञ्यासुभयपदमित्यर्थः॥ ६४६॥

द्युतौ अन्तस्वपश्च खेर्जिः स्यात्। दिद्युते दिद्योतिषते देद्युत्यते सुष्वापयिषति असूषुपत्॥ ६४७॥

बहुवचनं गणार्थम्। अतएव पमिति वृतादेरात्मनेपदिनः परस्मैपदे स्यसनोः इम् निषेधादेव स्यसनोरुभयपदित्वमित्यर्थः। यथा वर्त्स्यति विवृत्सति। मे तु वर्त्तिष्यते विवर्त्तिष्यते। मादन्यत्र तु विवर्त्तिषा विवृत्सा विवर्त्तिषुः विवृत्सुः विवर्त्तिषितव्यं विवृत्सितव्यम्। वृतादिश्च वृतुर्वृधुः शृधुः स्यन्दूः कृपूः पञ्च वृता-दयः। निष्यन्दते घृतमिति अप्राणित्वात् षत्वं वा। निस्यन्दते हस्तीति प्राणि-त्वान्न षः॥ ६४८॥

[ ११० ] क्ृपूङ् व्ल्ट कल्पने।

६४९। क्रपः क्लृपोऽक्रपादौ।

क्रपः ६।, क्लृपः १।, अक्रपादौ ७।।

क्रपः स्थाने क्लृपः स्यात् न तु क्रपादौ। कल्पते।

६५०। नेम् पे ड्याः।

न ।१।, इम् ।१।, पे ७।, ड्याः ६।।

क्रपो ड्या इम् न स्यात् पे। अतएव पम्। कल्प्ता। पे किं कल्पिता कल्प्ता, कल्प्स्यति, मे तु कल्पिष्यते कल्प्स्यते।

[ १११ ] व्यथ षङ् पीड़ायाम्।

६५१। व्यथ-ग्रह-ज्या-वय-व्यध-वश-व्यच-प्रच्छ-व्रश्च-भ्रस्ज-स्वप-वच-यजादेः खेर्जिष्ठ्याम्।

व्यथ-यजादेः ६।, खेः ६।, जिः १।, ठ्याम् ७।।

एषां खेर्जिः स्यात् ठ्याम्। विव्यथे।

[ ११२ ] ञि त्वरा षङ् स्वटे।

अत्वरिढ्वम् अत्वरिध्वम् अत्वरिड्ढम्।

इति भवत्-पादः।

---

क्रपः स्थाने क्लृपः स्यात् न तु क्रपादौ परे साध्ये। क्रपादिर्यथा क्रपा क्रपाणः क्रपणः कर्पटश्च क्रपः क्रपौ ॥ ६४९ ॥

अत्रापि अतएव परस्मैपदमिति बोध्यम्। ततश्च द्युतादिष्वाभुभयपदित्वं वृतादिर्द्युताद्यन्तर्गणत्वात् ड्यां स्यसनोश्च उभयपदित्वम्। क्रपस्तु द्युतादित्वात् ड्यां वृतादित्वात् स्यसनोः नेम् पे ड्या इत्यनेन ड्याश्च उभयपदित्वम्। अन्यत्र सर्वे एवात्मनेपदिनः ॥ ६५० ॥

व्यथश्च ग्रहश्च ज्याश्च वयश्च व्यधश्च वशश्च व्यचश्च प्रच्छश्च व्रश्चश्च भ्रस्जश्च स्वपश्च वचश्च यजादिश्चेति तस्य। एषां खेर्जिः स्यात् ठ्याम्। विव्यथे जग्राह जिज्यौ उवाय वय इह वेञ स्थाने वयादेशः। तस्य च वेञ स्थाने जातत्वेनैव जौ

## चतुर्थपादः—मिश्रः ।

[ ११३ ] पतॢज गत्यैश्वर्य्ययोः ।

६५२ । वच्यस्य-श्वि-पतां वोचस्थ-श्व-पप्ता ङे ।

वचि-अस्य-श्वि-पतां ६।।।, वीच-अस्थ-श्व-पप्ता: १।।।, ङे ७। ।

एषामेते क्रमात् स्युर्ङे । प्रणपप्तत् ।

[११४] णजटु वम उद्गिरणे । वेमतुः ववमतुः वेमिथ ववमिथ ।

[ ११५ ] भ्रमु जण चलने ।

( ५८४ ) क्रमक्लमेति श्यन् वा । भ्रम्यति भ्रमति । भ्रेमतुः बभ्रमतुः ।

[ ११६ ] सह जङ शक्तौ ।

व्यषहत व्यसहत । [६०६] वेमसहेतोम् वा । परिषहिता ।

---

सिद्धे इह ग्रहणं ठ्यां नवे प्रच्छामिति जि-निषेधस्य बाधनार्थम् । विव्याध उवाश्च विव्याच पप्रच्छ वव्रश्च बभञ्ज । ग्रहप्रच्छव्रश्चभ्रस्जां खिर्जौ ऋते भ्रमखर्थेति ऋकारस्याकारे जि: फलाभावेऽपीह ग्रहणं ग्रहादिगणार्थम् । तेन गृह्यते पृच्छ्यते वृश्च्यते भृज्ज्यते इत्यादिषु ग्रहस्वपाद्यैरिति जि: । सुष्वाप उवाच स्वप साहचर्य्यात् वच इह अदादिको ग्राह्य इति जौमरा: । इयाज । ठ्यां किं वा व्यध्यते । यजादिस्तु "यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिस्तथा । वदिर्वशिश्च श्वयतिश्चैते नव यजादय: । अलरिद्धुमित्यादि धे सलोपपचे ढो वा पचे सस्य द: ॥ ६५१ ॥

इति मवत्पाद: ।

---

वचिश्च असश्च श्विश्च पत् च ते तेषां वीच च अस्थश्च श्वश्च पप्तश्च ते । वचिरिति अदादिक एव भौवादिकात् ङप्राप्त्यभावात् अस इति दिवादिक एव अन्यस्मात् ङप्राप्त्यभावात् । प्रणपप्तदिति ऌदित्वात् ङे अनेन पप्तादेश: गदनदेति णत्वम् । एवम् अवोचत् आस्थत् अश्वत् । वेमतुरित्यादि जॄभ्रमवमेति एत्वं खिलोपश्च वा व्यषहत इत्यादि निविपरिस्वनजेति [illegible]

## ६५३। सहवहोऽदो ढि।

सह-वहः ६।, अत् ।१।, ओ ।१।, ढि ७।।

सहवहोः अकार ओ स्यात् ढे परे। निसोढ़ा। [ ५७२ ] ओत्वान्न षः।

[ ११७ ] षद ल्ट जौ विषादे गतौ।

निषीदति। न्यषदत्। निषसाद। प्रतेस्तु। प्रतिसीदति।

[११८] शद ल्ट जौ शाते।

## ६५४। शदोऽपि मम्।

शदः ५।, अपि ७।, मम् १।।

शीयते। अशदत्। [ ११९ ] फण मिण गतौ।

फेणतुः पफणतुः, फेणिथ पफणिथ।

[ १२० ] राजृ ञ ण दीप्तौ।

रेजतुः रराजतुः, रेजे रराजे। [ ५७९ ] विधिबला-दातोऽप्येत्वम्।

एवं [ १२१ ] टुभ्राश्टृ ङ ण दीप्तौ।

भ्राश्यते भ्राशते। भ्रेशे बभ्राशे।

एवं [ १२२ ] टुभ्लाश्टृ ङ ण भासि।

[१२३] ष्वन ण शब्दे।

विष्वणति अवष्वणति मांसम्। व्यष्वणत् विष्वेणतुः विषष्वणतुः। विस्वनति वीणा निस्वनति अन्नम्। [ ५७२ ] अन्नव्यवेत्युक्तेर्न षः।

[ १२४ ] खनुञ विदारे।

[ २३० ] हनगमेत्युङ् लोपः, चख्नतुः चख्ने।

---

सुगमम्। निसोढेति वेमुसहेत्यनिम् पचे हौढौभाविति हस्य ढेऽनेनाकारस्य ओत्वे ढभात्तथोरिति तस्य धे ष्टुभिरिति धस्य ढे ढ्रोढ्रीति ढस्य लोपे ओत्वान्न षत्वम्। एवं सोढव्यः। वोढ़ा वोढ़व्यः॥ ६५३॥

## ६५५। खन-सन-जनां ङा झसे, ये तु वा।

खन-सन-जनां ६॥, ङा ।१।, झसी ७, ये ७, तु ।१।, वा ।१। ।

खायात् खन्यात्। [ १२५ ] चायृ ञ निशाने अर्च्चे।
अचायीत् [ ६४२ ] य्वो र्लोप इति। अचासीत्।
[ १२६ ] लषञ स्पृहायाम्। लष्यति लषति।
[ १२७ ] गुहू ञ संवरणे।

## ६५६। गुहो णोरूः।

गुहः ६।, णीः ६।, ऊः १। ।

गुहो णोरूः स्यात्। गूहति गूहते। अगूहीत् अघुक्षत्।

---

शदृल्सजौ शाते इत्यस्मादव्विषये मं स्यात् यस्यां विभक्तौ शप् सम्भवति तत्रा-त्मनेपदमित्यर्थः। शीयते शीयेत अशीयत। अपि किम्? अशदत् शशाद शत्ता शदात् शत्स्यति अशत्स्यत्। फेणतुरित्यादि फणादित्वात् एत्वं खिलोपश्च वा। विधिबलादित्यादि राजृञण प्रभृतीनां फणादिपाठबलादाकारस्यापित्वं खिलोपश्च इत्यर्थः। भाश्यत इति क्रमक्लमेति श्यन् वा। भेशे इति फणादित्वात् खिलोपादिर्वा। अवष्वणतीति विधानबलादकारात् परस्यापि षत्वम्॥ ६५४॥

खनश्च सनश्च जन च ते तेषाम्। एषां ङा स्यात् झसे ये तु वा। खातः सातः जातः। खायते खन्यते सायते सन्यते जायते जन्यते। अत्र वाशब्दस्य व्यवस्थावाचित्वात् पिति झसे परे न स्यादिति बोध्यम्। तेन यङ्लुकि चङ्कन्ति चङ्कंसि संसन्ति संसंसि जञ्जन्ति जञ्जंसि एवं वाशब्दस्यानुक्तसमुच्चयार्थत्वात् तनोतेर्ङा स्यात् वा यकि इति बोध्यम्। तायते तन्यते। तथा च तद्दूरीकृत्य कृतिभि-र्वाचस्पत्यं प्रतायते इति माघः। अचायीदिति वेमूदिदिलीम् वा पक्षे य्वोर्लोप इति यलोपः। लष्यतीति क्रमक्लमेति श्यन् वा॥ ६५५॥

कृति गुह्यं गौह्यमित्युदाहरता अचि परे एवायं विधिरिति ज्ञापितम्। गूहति गूहिता गोढा गूहिष्यति घोक्ष्यति अतएव गुहो ङिन्दचीति औमराः। अघुक्षदिति वेमूदिदित्यत्र वाशब्दस्य गुहः सेरिमीविलक्षणविकल्पार्थत्वात् सेः अनिम् पक्षे सित्वं न स्यात् अनिमत्वात् सगेव॥ ६५६॥

## ६५७। गुह-दुह-दिह-लिहां टीमदन्त्ये न सिः सक् वा।

गुह-दुह-दिह-लिहां ६॥, टीमदन्त्ये ७।, न ।१।, सिः १।, सक् ।१।, वा ।१।।

एषां टीमदन्त्ये परे सिर्न स्यात्, सक् च वा स्यात्। अगूढ़ अघुक्षत।

## ६५८। सकोऽल्लोपोऽच्यव्वे।

सकः ६।, अत्-लोपः १।, अचि ७।, अव्वे ७।।

सकोऽकारस्य लोपः स्यात् अव्वे अचि परे।

अगूहिषि अघुक्षि। अगुह्वहि अघुक्षावहि। दन्त्ये किम्, अगूहिष्महि अघुक्षामहि। अव्वे किम्। अगूहिषत अघुक्षन्त।

---

व्या सं टीमं टीमे दन्त्यष्टीमदन्त्यः तस्मिन्। लिहामिति परत्र जनिष्यमाणत्वेन सम्बन्धी यः सिः स न स्यात् एतेन सैर्जातितुल्यत्वाभिधानात् भपी न प्रसङ्गः सक्कृतौ विप्रतिषेधौ यद्बाधितं तद्बाधितमेवेति न्यायादित्यर्थः। अन्यथा पञ्चम्यैव सिद्धे षष्ठ्या वैयर्थ्यं स्यात्। सिर्नित्यं निषिध्यते हशषेति विहितः सक् च विभाष्यते इत्यर्थः। अगूढ़ेति इम् पक्षे सेर्निषेधे अरवसाभावादिमोऽभावे ढोढ़ौभाविति ढभात्तथोरिति ढ्रोढ्रि घंश्वेति। अघुक्षतेति तनि अनिम् पक्षे सकि हस्य ढे भभान्त-स्येति गस्य घे षढोः कः सि इति ढस्य के क्रिलादिति षत्वम्। एवम् अदुग्ध अधुक्षत अदिग्ध अधिक्षत। अलीढ़ अलिक्षत। एवञ्च थास् ध्वम् वहिष्वपि यथायोग्य-मुदाहर्त्तव्यम्। किञ्च प्रत्ययत्वेन दन्त्यवकारादेर्वहेः प्राप्त्यर्थमेव दन्त्योपादानं कृतम् अन्यथा टीमतौ इत्युक्तावपीष्टसिद्धिः ॥ ६५७ ॥

अतो लोपः अल्लोपः न व्वम् अव्वं तस्मिन्। अघुक्षि इति गुह इ सक् ढोढ़ौभौ भभान्तस्येति गस्य घः षढोः कः से षत्वम् अनेन सकोऽल्लोपः इम् पक्षे अगुहिषीति बोध्यम्। अगुह्वहीति गुह वहि सेर्निषेधे सकोऽप्यप्राप्तिपक्षे वकारस्य दन्त्यत्वेन भसत्वाभावात् ढोढ़ौभाविति न ढः। पक्षे सकि आत्तिमभवीति आत्वे अघुक्षावहीति दन्त्यः किम् अघुक्षामहीति दन्त्यपरत्वाभावात् गुहदुहदिहलिहां इत्यस्याप्राप्तौ वैमत्वादनिम् पक्षे हशषोऽनिमिज्जुङ इत्यनेन सकि आत्तिमभवीति आत्वम्। इम् पक्षे तु अगुहिष्महि इति बोध्यम्। अव्वे किं गुह अन्त हशष इति

[ १२८ ] हृञ् हृत्याम्।

६५८। इगुङ्ऋर्मढौस्यनिम् किद्गमस्तु वा।

इगुङृः ५।, म-ढौसि ।१।, अनिम् ।१।, कित् ।१।, गमः ५।, तु ।१।, वा ।१।।

इगुङ ऋवर्णान्ताच्च परा मे स्थिता अनिम् ढौ सिश्च कित् स्यात्, गमस्तु वा। अहृत अहृषाताम्। हृषीष्ट।

[ १२९ ] टुडु भृञ भरणे। बभृव।

[१३०] दान ञ आर्जवे छिदि। दीदांसति दीदांसते।

एवं [ १३१ ] शान ञ तेजे। शीशांसति।

[१३२] भजी ञ भागसेवयोः। भजते। भेजे भेजिथ बभक्थ।

[ १३३ ] श्रि ञ सेवायाम्।

[ ६१३ ] जिश्रीत्यङ् अशिश्रियत् अयिता।

[ १३४ ] रन्जी ञ रागे।

६६०। रन्जोऽपष्कानासघ्णिनौ नलोपो ञौ तु मृगरमणे।

रन्जः६।, अप्-षक-अन-अस्-घ्णिनौ ७।, न-लोपः १।, ञौ ७।, तु ।१।, मृगरमणे ७।।

रजति रजते। ररजतुः ररञ्जतुः।

---

सकि लोपोऽतोऽदेचौरित्यकारलोपे अवृचन्न इति। अकारेऽवञ्चलोलव्येऽपि अवृ इति कतं ज्ञापयति। लोपोऽस्योमाङ्गोरिति लोपोऽतोऽदेचौरिति हसाल्लोपोऽशित्ययोरित्येतेभ्योऽन्यसूत्रेण अकारलोपस्य स्थानिवत्त्वं नास्तीति तेन लुगङ्गोऽप इत्यादिना अकारलोपे स्थानिवत्त्वानङ्गीकारात् नान्तोऽदनत इत्यस्य प्रवृत्तौ दुहते दिहते लिहते इत्यादि सिद्धमिति॥ ६५८॥

इक् उङ् यस्य स इगुङ्। इगुङ् च ऋश्च इगुङृः तस्मात्। ढौ च सिश्चेति से ढौसि मढौसि। नास्ति इम् यस्य सोऽनिम् इति मढौसेर्विशेषणम्। यथा जभौ भिदिर् भित्सीष्ट अभित्त वुध्यौङ भुत्सीष्ट अबुद्ध सृज्यौङ् सृक्षीष्ट असृष्ट डुकृञ् कृषीष्ट अकृत। कृञगि हिंसे स्यात् वृदॄवुरित्यनिम् पचे कीर्षीष्ट अकीर्ष्ट। गमस्तु सङ्गसीष्ट सङ्गंसीष्ट समगत समगंस्त। बभूवेति नेमसुमिति इम् निषेधः। दीदां-

[ १३५ ] त्विषीञ् कान्तौ । अत्विक्षत् त्विक्षीष्ट ।

[ १३६ ] यजै ञौ देवार्च्चा दान-सङ्गतौ ।

[ ६५१ ] व्यथग्रहेति जिः, इयाज ।

६६१ । ग्रहस्वपाद्योः कङित्कितोर्जिः ॥

ग्रह-स्वपाद्योः ६॥, कङित्-कितोः ७॥, जिः १।।

ग्रहादेः किति ङिति, स्वपादेः किति, जिः स्यात् ।

ईजतुः ईजुः इयजिथ इयष्ठ ।

[ १३७ ] डु वपौ ञै मुण्ड-बीजोप्त्योः । प्रण्युवाप ।

[ १३८ ] वहैञौ प्रापणे ।

प्रण्यवाक्षीत्, अवोढ़ । उवाह ऊहे ।

---

अतीति क्तिजेति सन् खेर्डौ च । मेजिथेति स्रजदृशेति वेम् अयितेति नेमेका-मित्यत्र भिवर्जनादिम् ॥ ६५९ ॥

अप् च यकश्च अस् च घ्णिनिश्चेति तस्मिन् । यथा रजति रजकी रजनं रजः रागी । घ्णिनिरिति क्तप्रत्ययो वक्तव्यः । अस्य घकारो जस्य गकारार्थः पूर्व-णकारो वृद्ध्यर्थः । शेष इकार उच्चारणार्थः । रञ्जनमिति अप्रन्तस्यैव । ररजतरिति स्यात् व्यपिदिति कित् पचे न लोपः · · गात्वचादिति त्विषौ अभ्यासे हृ्ग्रषे सक् । त्विक्षीष्टे · इगुङ् रिति · · ·त्वान्न गुणः ॥ ५६० ॥

ग्रहश्च स्व·श्च ग्रहस्वपौ तावादौ ययोस्तौ ग्रहस्वपादौ तयोः । कङावितौ यस्य स कङित् कङिच्च किच्च कङित्कितौ तयोः । स्वपग्रहाद्योः किदङ्वोर्जिरिति कृतेऽपीष्ट· सद्धौ कङित्कितोरिति गौरवम् कथमिति चेन्न । अनिम्सनोऽगुणत्वे व्याप्रश्ती· ·नाम् अनिमां सनि जेरापत्तेः । वस्तुतस्तु सनोऽगुणत्वे ग्रहस्वपप्रच्छामिति नियमा· ·दन्येषामनिमि सनि जेः प्रसङ्गाभावः । गौरवं स्पष्टार्थम् । व्यथग्रहेति सूत्रे प· ·ठिता ग्रहादयः स्वपादयश्च । यथा गृह्यते गृह्णाति जीनः जीनाति विध्यते विध्य· ·ति उश्च्यते उश्चन्ति । व्यचस्तु तत्रोपादानं ठ्यां खिर्जिप्राप्त्यर्थमेव । व्यचोजिर-· ·यदसीति अनेन जित् णित् अस् एभ्योऽन्यत्र जेः कर्त्तव्यत्वात् । पृच्छ्यते पृच्छति प्राश्चते हवति भृज्ज्यते भृज्जति सुप्यते उच्यते इज्यते इत्यादि ईजतुरिति व्यथग्रहेति अनेन मूलधातोर्जिः । इयजिथ स्रजदृशेति वेम् अनिम् पचे भ्रस्जेति

[ १३९ ] वेञ् स्यूतौ।

६६२। ठ्यां न वे-प्रच्छाम्।

ठ्यां ७।, न ।१।, वे प्रच्छाम् ६॥।

वेञ् प्रच्छ व्रश्चि भ्रस्जीनां जिर्न स्यात् ठ्याम्। ववौ ववतुः।

६६३। वेञो वय् वा।

वेञः ६।, वय् ।१।, वा ।१।।

वेञो वय् स्याद्वा ठ्याम्। उवाय ऊयतुः।

६६४। य् वः क्विति।

य ।१।, वः १।, क्विति ७।।

वेञो यस्य वः स्याद्वा ठ्यां क्विति। ऊवतुः।

[ १४० ] व्येञ् वृतौ।

६६५। ना व्येष्ठ्याम्।

न ।१।, आ ।१।, व्येः ६।, ठ्याम् ७।।

व्येञ आ न स्यात् ठ्याम्। विव्याय।

---

षङ्। प्रणुवाप इति गदनदेति णत्वम्। प्रण्यवाक्षीदिति ह्रीढीभौ व्रजवदेति त्रिः गदनदेति णत्वम्। अवोढेति वह तन् सिः औदित्वान्नेम् झसस्थादिति सिलोपः हस्य ढत्वे सहवह इति ओत्वे ढभात्तथोरिति तस्य धत्वे ष्टुभिरिति धस्य ढत्वे ढोढ्रीति ढलोपः॥ ६६१॥

वेश्च प्रच्छश्च वेप्रच्छः। प्रच्छ इति बहुवचनं गणार्थम्। तेन व्यधग्रहेति सूत्रे प्रच्छादयो ग्रहादिगणसमाप्तिपर्यन्ता इत्यर्थः। अत आह। प्रच्छि व्रश्चि भ्रस्जी-नामिति। वेञ्निषेधेऽपि तदादेशस्य वयोर्जिर्न निषेधः। अन्यथा तत्र वयो-ग्रहणस्य वैयर्थ्यं स्यात्। ववौ इति वेञ एचोऽशित्या णप् व्यधग्रहेति प्राप्तव्यः वेर्जिर्न स्यात् नवातो डौ। ववतुरिति व्यधग्रहेति वेर्ग्रहस्वपाद्योरिति मूलधातो-र्जिर्नाभूत्॥ ६६२॥

उवाय ऊयतुरिति व्यधग्रहेति वेर्ग्रहस्वपाद्योरिति मूलधातोश्च जिः॥ ६६३॥

वेञो यस्यासम्भवात् तदादेशस्य वय एव यकारस्येत्यर्थः॥ ६६४॥

## ६६६ । जिं वान्त्यः किति ।

जिं २।, वा ।१।, अन्त्यः १। किति ७।।

ह्वेर्व्यञोऽन्त्यो भागो जिं वा प्राप्नोति ठ्याम् किति। विव्यतुः विव्ययतुः विव्ययिथ।

[ १४१ ] ह्वेञ् स्पर्द्धायां शब्दे च। अह्वत् अह्वत अह्वास्त।

## ६६७। ह्वो ह्वेर्जिः।

ह्वः ६।, ह्वेः ६।, जिः १।।

ह्वेर्ह्वञो जिः स्यात्। जुहाव जुहुवतुः। [१४२] एँ वसो निवासे।

## ६६८। स त् स्यरे।

स ।६।, त् ।१।, सि ७।, अरे ७।।

सस्य त स्यात् अरे से परे। अवात्सीत् अवात्ताम्, उवास ऊषतुः।

[ १४३ ] वदे वाचि। अच्छवदति। [५७४] व्रजवदेति ञिः।

अवादीत् उवाद ऊदतुः।

[ १४४ ] टुओ श्वि इर् गतिवृद्ध्योः।

[ ५६५ ] शासुलिद् द्युदिति ङः वा। अश्वत्।

[ ६१३ ] जिश्वीत्यङ् वा। अशिश्वियत् अश्वयीत्।

---

व्येञ्वृतावित्यस्य ठ्यां एचोऽशित्येति आकारो न स्यात्। ठ्यामित्युपादानं कितीत्यस्य वाशब्दस्य निवृत्त्यर्थम्। विव्याय ञिणत्यन्ते जुङ्तोरिति वृद्धिः॥ ६६५॥

विव्यतुरिति मूलधातोर्जौ कृते श्वुध्वोरिति यः। पक्षे विव्ययतुरिति यलार्थेति अयादेशः। उभयत्र खेर्नित्यं जिः। विव्ययिथेति सृजदृशीत्यत्र व्येवर्जनान्नित्यमिम्। अह्वदिति वत्ताव्यस्यल्येति ङे उसेचीत्याकारलोपः। अह्वत अह्वास्तेति लिव्यस्तु से इति ङी वा॥ ६६६॥

जेः पुनरुपादानात् ठ्यां किति वा इति त्रयाणां नानुवृत्तिः। ह्वयतेर्यत्र द्वित्वं तत्र खेर्मूलधातोश्च द्विर्निमित्तको जिः स्यात् इत्यर्थः। यथा जुहाव अजूहवत् जुहूयति जोहूयते॥ ६६७॥

स इति लुप्तषष्ठ्येकं त इति लुप्तप्रथमैकम्। अरे किं आससे। अवात्तामिति

## ६६९। श्वेर्जिर्वा यङ्ठ्योर्ञ्यङ्सनोः।

श्वेः ६।, जिः १।, वा ।१।, यङ्-ठ्योः ७॥, ञ्यङ्-सनोः ७॥।

**श्वेर्जिर्वा स्यात् यङि ठ्याम् ञेः परे अङि सनि च।**

**शुशाव शिश्वाय शुशुवतुः शिश्वियतुः। श्वयिता। शूयात्।**

**इति मिश्रपादः।**

**इति भ्वाद्यध्यायः।**

---

अन्तरङ्गत्वान्निरवकाशत्वाच्च आदौ सस्य तकारे पश्चात् सेर्लोपः जौमरा अध्यम्। न च आदौ सेर्लोपेऽपि त्यलोपे त्यलक्षणमिति न्यायात् वृद्धिवत् सस्य तकारेण भाव्यमिति वाच्यम्। तस्य लोपे सति त्यस्वरूपेण विहितं यत् कार्यं तदेव स्यात् न तु त्यस्य वर्णविहितमिति। तेन सौ विहितत्वात् वृद्धिः सकारे विहितत्वात् सस्य तकारो न स्यात् इति। अन्यथा अवुद्ध इत्यादौ सेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् सकारे परे भभान्तस्येत्यादिना बकारस्य भकारापत्तिः। रामानन्दकाशीश्वरौ तु प्रत्ययलोपस्य बलवत्वादादौ सेर्लोपे सकारपरत्वाभावात् सस्य तकाराभावे आवात्तामित्याहतुः। तद्धेयम्। एकन्यायाद्दलवता सिलोपेन न्यायाद्दलवत्तरस्य तकारादेशस्य बाधितुमशक्यत्वात् अच्छ्वदतीति व्याच्छस्येति समासः। अवादीदिति व्रजवदेति त्रिः। अश्वदिति टुओश्वि शासलिद्दयुदिति ङे वच्यस्श्वि पतामिति श्वः। अश्वयीदिति पक्षे ञ्यां सौ नेमेकाजित्यत्र श्विवर्जनादिमि सेर्लोपे व्रजवदेत्यत्र श्विवर्जनात् न त्रिः॥ ६६८॥

यङ् च ठी च यङ्ठ्यौ तयोः। अङ् च सन् च अङ्सनौ। ञेः परावङ्सनौ तयोः। अत्र वाशब्दस्य व्यवस्थावाचित्वात् श्वेर्यङादौ द्वयोरेव जिः स्यात् पक्षे द्वयोरेव जिर्न स्यात् इत्यर्थः। अन्यथा अशूशवदित्यादौ प्रागच्कार्यादिति नियमादादौ द्वित्वे वेर्जिर्न स्यात्। यथा शुशाव शिश्वाय इत्यादि एवं शोशूयते शेश्वीयते अशूशवत् शुशावयिषति श्वयितेति नेमेकाजित्यत्र श्विवर्जनादिम्। शूयादिति यहस्वपाद्योरिति जिः घोऽजुष्वरे इति दीर्घः॥ ६६९॥

इति मिश्रपादः। इति भ्वाद्यध्यायः।

## प्रथमः पादः—अदादिः ।

---

[ १४५ ] अद्लृ भक्षणे ।

### ६७० । लुगद्भ्योऽपः ।

लुक् ।१।, अदभ्यः ५।॥, अपः ६। ।

अदादेः परस्य अपो लुक् स्यात् । अत्ति ।

### ६७१ । ह्रुभसो र्हेर्धिः ।

ह्रु-भसः ५।, हेः ६।, धिः १। ।

होर्भसाच्च परस्य र्हेर्धिः स्यात् । अद्धि ।

### ६७२ । हसादभ्यां दिसेर्लोपामौ ।

हस्-अदभ्यां ५।॥, दि-सेः ६।, लोपामौ १॥ ।

हसात् परयोर्दिस्योर्लोपः स्यात् अदः परयोः अम् स्यात् । आदत् आदः ।

---

बहुवचनं गणार्थम् । घे शपे इत्यत्र अदादिवर्जनेनैवेष्टसिद्धौ अदादेः शपं विधाय तत् लुक् करणं कदाचित् अदादेः शपः स्थित्यर्थं तेन रुजां एवाहनत् पृथगिति चर्करीत्यादि सिद्ध्यति । वस्तुतस्तु लघिर् रुद रोदने तुर्वि वेगे इत्येताभ्यां के भावादि ढे वीदुङोऽव्वत इत्यनेन गुणविकल्पे रोदितं रुदितं तेन तोरितं तुरितं तेन इत्यादि सिद्ध्यर्थम् । लुक् करणात् युतः युवन्ति इत्यादौ न गुणः ॥ ६७० ॥

यथा जुहुधि रुधिधौं ज रुन्धि अद्लृ अद्धि । वशलु उड्ढि च अत्र शच्छाजेति षड् भप्भसोरिति षस्य डः । धौ पिषल पिण्ढि चकास्र चकाद्धि इत्यादि । परत्वाद्विशेषत्वाच्च तातङादेशेनायं बाध्यते । तेन लम् अत्तमत्तादित्यादि ॥ ६७१ ॥

दिसेरित्येकवचनं यथासंख्या निरासार्थं दिसेरिति ध्या एव स्यात्तु सिव्यवधानादसम्भवः । यथा अलेट अहन अभनक अवट अपिन्ट इत्यादि ॥ ...

## ६७३। घस्लृदः सन् च्यल् घञि।

घस् लृ ।१।, अदः ६।, सन्-टी-अल्-घञि ७।

अदो घस्लृ स्यात् सनि व्याम् अलि घञि च। [ ५६५ ] लित्वात् ङः। अघसत्।

## ६७४। ठ्यां वा।

ठ्यां ७।, वा ।१।।

जघास आद। [ २३० ] हनगमेत्युङ् लोपः। जक्षतुः, आदतुः जघसिथ आदिथ। [ १४६ ] प्सा ल भक्षणे। प्रणिप्साति।

## ६७५। द्विषविदातोऽनुस् वा।

द्विष विद-आतः ५।, अन् ।१।, उस् ।१।, वा ।१।।

द्वेष्टेर्वेत्तेरादन्ताच्च परोऽन् उस् स्याद्वा। अप्सुः अप्सान्। [ १४७ ] वश ल कान्तौ। वष्टि। [ ६६१ ] ग्रहस्वपाद्योरिति जिः। उष्टः उशन्ति। अवट्। उवाश।

---

सन् च टी च अल् च घञ् चेति तस्मिन्। जिघत्सति अघसत् हनगम्येत्यत्र ङवर्जनात् न उङ्लोपः। प्रघसः घासः॥ ६७३॥

अदो घस्लृ स्यात् वा ठ्याम्। जक्षतुरिति हनगमेत्युङ्लोपे झप्झसोरिति घस्य कत्वे शासवसघसेति षत्वम्। अत्र अदौ भक्षे लृघसौ भक्षे इति द्वाभ्यामेव आद जघास इत्यादि सिद्धावपि ठ्यां वेति सूत्रविधानं ज्ञापयति घसतेस्थपि अदतुल्यत्वं स्यादिति। तेन स्जहृशीत्यत्र अदो वर्जनादेव घसो वर्जने सिद्धे जघसिथेत्यत्र इमि विकल्पाभावे नेमंसुमिति नियमात् वसोऽरस्येति नित्यमिम्। न च स्थानिवत्त्वादेव अदतुल्यत्वमिति वाच्यम्। धात्वादेशानां स्थानिवत्त्वानङ्गीकारात्। अन्यथा अजधातोः स्थाने जातस्य वीधातोः सेमत्वापत्तेः। हनस्थाने जातस्य वधधातोरनिमत्वापत्तेश्च। प्रणिप्सातीति गदनदेति णत्वम्॥ ६७४॥

अद्विषुः अद्विषन् अविदुः अविदन् उस्येचौत्याकारलोपे अप्सुः अप्सान् अन् इति

[ १४८ ] हन लौ हिंसागत्योः ।

६७६ । वनतनाद्यनिमां अम्लोपो भस्-यप्यतिक्यणौ ।

वन-तनाद्यनिमां ६॥, अम्लोपः १।, भस्-यपि ७।, अतिकि ७।, अणौ ७।

एषां अम्लोपः स्यात् अणौ भसे यपि च, न तु तिकि । प्रणिहतः । । [ १८९ ] हनो ङ्णौ घ्नः । घ्नन्ति । प्रहथः प्रहन्वः प्रहथः प्रहन्मः ।

६७७ । जह्येधि-शाधि हन्यस्ति-शास्ति हिना ।

जहि-एधि शाधि ।१।, हनि-अस्ति शास्ति ।६।, हिना ७। ।

एषां हियुक्तानां क्रमादेते स्युः । जहि ।

६७८ । हनो बधष्टीव्यलि टीमे तु वा ।

हनः ६।, बधः १।, टीव्यलि ७।, टीमे ७।, तु ।१।, वा ।१। ।

हनो बधः स्यात् व्याम् व्यामलि च, टी-मे तु वा । अबधीत् ।

---

अनुस्सिद्धेरिति निल्मसुसि अवेदिषुः अस्मासिषुः । वष्टीति वश्लुस्यहि शब्दाजिति षङ् । अवट् इति हसाङ्गामिति दिस्योर्लोपे शब्दाजिति षङ् षोड़: फे ॥ ६७५ ॥

नास्ति इम् यस्मात् सोऽनिम् । वनश्च तनादिश्च अनिम् चेति ते तेषाम् । अमो लोपः अम्लोपः । भसश्च यप् च भसयप् तस्मिन् । न तिक् अतिक् तस्मिन् । नास्ति णुर्यस्मिन् सोऽणुः तस्मिन् । वनव्यापृतौ । वतः वतिः प्रवत्य । ततः ततिः प्रतत्य । चतः चतिः प्रचत्य । हतः हति प्रहत्य । गतः गतिः प्रगत्य । भसि किं वन्यते इत्यादि । अणौ किं वंवन्ति इत्यादि । अतिकि किं वन्तिरित्यादि । प्रहण्व इत्यादि वस प्रत्ययत्वात् दन्त्यत्वे भसत्वाभावात् अमो लोपाभावे मवान्तहन् इति वा णत्वम् ॥ ६७६ ॥

जहिश्च एधिश्च शाधिश्चेति । हनिश्च अस्तिश्च शास्तिश्चेति जहीति पत्ते तातङ्ङ्ऽपि हतात् ॥ ६७७ ॥

## ६७९। खेर्हो घो ञिणति च।

खेः ५।, हः ६।, घः १।, ञ्णिति ७।, च ।१।।

खेः परस्य हनो हस्य घः स्यात् ञिति णिति च।

जघान, जघ्नतुः। हन्ता। बध्यात्। प्रहणिष्यति।

[ १४९ ] द्यु लभिसर्पणे।

## ६८०। रपिद्दस्युतोऽद्देर्त्रिः।

रं-पित्-हसि ७।, उतः ६।, अहेः ६। त्रिः १।।

अद्देर्धोरुकारस्य त्रिः स्यात् पिति हसि रे। द्यौति द्युतः द्युवन्ति। [१५०] यु ल मिश्रणे अमिश्रणे च। यौति यविता। [१५१] नु ल स्तुतौ। अनावीत् अनौषीत्। नुनुविव। [ १५२ ] क्ष्णु ल तेजने। क्ष्णविता। [ १५३ ] ष्णु ल प्रस्नुत्याम्।

[५७९] स्नुक्रमोऽमे इतीम्। अस्नावीत्। [१५४] इन ल गतौ।

## ६८१। यिनोऽच्यणौ।

यें ।१।, इनः ६।, अचि ७।, अणौ ७।।

इनो यः स्यात् अणौ अचि। यन्ति।

---

भौवादिकः प्रयुज्यत इत्यर्थः। तेन अवधीदित्यादौ बधधातोरौदित्वाभावादसौ ऽस्येतीम् हसादिः सेम इत्यत्र बधवर्जनान्न त्रिः। एवं बध्यात् बध्यास्तां बधः टीमे तु आबधिष्ट आहत ॥ ६७८ ॥

चकारादर्थद्वयम्। खेः परस्य हनो हस्य घः स्यादित्येकोऽर्थः। हनो हस्य घः स्यात् ञिति णिति च परे इत्यपरोऽर्थः। खेः परस्य यथा जघनिथ जिघांसति जङ्घन्यते। ञिति घातयति णिति अघानि घातकः घातं घातं प्रहणिष्यतीति स्वस्यर्द्धन इति इम् नादिहन्मीनेति णत्वम् ॥ ६७९ ॥

रश्चासौ पिच्चासौ हस् चेति रपिद्हस् तस्मिन्। न हि रहिः तस्य। द्यौति रौति। अहिः किं जुहोति। यवितेति नेमिकाजित्यत्र युवर्जनादिम्। अनावीदित्यादि वेमूदितीम् नुनुविवेति अव्या इत्युक्तेर्नित्यमिम्। क्ष्णवितेति नेमिकाजित्यत्र क्ष्णुवर्जनादिम्॥ ६८० ॥

## ६८२। गा ण्याम्।

गा।१।, ण्याम् ७।

इनो गा स्यात् ण्याम्। अगात् इयाय।

## ६८३। खेः किति र्घः।

खेः ६।, किति ७।, र्घः १।

इनः खेः र्घः स्यात् किति ण्याम्। ईयतुः।

## ६८४। अगेर्ण्याम्।

अगेः ६।, ण्याम् ७।

अगेरिनो र्घः स्यात् किति ण्याम्। ईयाम्। अगेः किम्? अन्वियात्। [ १५५ ] अधीक ल स्मरणे।

## ६८५। इन्वदिकः।

इन् वत्।१।, इकः ६।

इन् इव इकः कार्य्यं स्यात् रूपञ्च तद्वत्।

[ १५६ ] या ल गतौ। प्रणियाति।

एवं [ १५७ ] वा ल गमनहिंसयोः।

[ १५८ ] द्रा ल स्वप्ने पलायने च।

[ १५९ ] ख्या ल ख्यातौ कथने च। अख्यत्। [ १६० ] मा ल माने। प्रणिमाति। मियात्।

---

गुश्चौरिति प्राप्तव्यस्य इयो बाधकः अस्य नकारो भूस्थापिवेत्यादिषु विशेषज्ञापनार्थः॥ ६८१॥

अगादिति भूस्थापिवेति सि लुक्॥ ६८२॥

ङिभूतादिनधातोः ण्याः अन्यत्र कितोऽसम्भवादेव ण्यामिति व्याख्यातं ईयतुरिति यिनोश्चवाविति यकारेऽनेन खेर्घः॥ ६८३॥

नियमोऽयं ण्यां किति अगेरिन एव दीर्घः न तु सगेरिति। ईयात्। अगेः किम् अन्वियात् समियादित्यादौ र्घोऽज्य्यरे इत्यनेनापि न दीर्घः॥ ६८४॥

[ ११६१ ] विद ल ज्ञाने।

६८६। वेत्तेः कीपं ठीपं वा।

वेत्तेः ५।, कीपं १।, ठीपं १।, वा ।१।।

विदः परस्य कीः पस्य ठ्याः पं स्याद्वा।

वेद विदतुः विदुः, वेत्थ विदथुः विद, वेद विद्व विद्म। पक्षे सुगमम्।

६८७। ङाम् वा ठ्यां ग्यान्तु कृनु।

ङाम् ।१।, वा ।१।, ठ्यां ७।, ग्यां ७।, तु १।, कृ ।१।, अनु ।१।।

वेत्तेः ठ्यां ङाम् वा स्यात् ग्यान्तु कृञ एवानुप्रयोगः।

६८८। तनुभ्यः शुप् रे घे।

तनुभ्यः ५।।।, शुप् ।१।, रे ७।, घे ७।।

विदाङ्करोतु वेत्तु।

६८९। कृञोऽहणौ रे।

कृञः ६।, अत् ।१।, उ ।१।, अणौ ७।, रे ७।।

कृञोऽकार उः स्यात् अणौ रे। विदाङ्कुरुताम्। वित्ताम् अविदुः अविदन्।

---

इक् इत्युक्तम्। अधिकग्रहणमन्यपूर्वस्य केवलस्य च प्रयोगनिरासार्थम्। यथा अध्येति अधीतः अधियन्ति अध्यगात् अधीयाय अधीयतुरित्यादि। अधीयादित्यादौ तु सह र्णे र्घ इत्यनेनैव दीर्घः। एवं गमिनिङीरित्यादावपि अधिजिगमिषति इति बोध्यम्। ससीतयो राघवयोरधीयन्निति भट्टौ। अधीयन्निति तु आतिदेशिकमनित्यमिति न्यायात् इन्वदिक् इत्यस्यानित्यत्वात् यिणोऽच्यणावित्यस्याप्राप्तौ श्रुभ्वोरिति इयि कृते सिद्धम्। प्रणियातीति सोहनवायेति णत्वम्। अक्षदिति वक्तव्यस्येति ङे उसेचीत्यालोपः। प्रणिमाति पतपददामेति णत्वम्। मेयादिति दामागे इति ङे॥ ६८५॥

स्थानिवदादेश इति न्यायात् ठीपस्य कीपतुल्यत्वान्न द्वित्वम्। न ङाम् न वा वेत्थेत्यादाविम्॥ ६८६॥

ङित्वान्न गुणः कृनु इत्यनेन अस्भुवोरनुप्रयोगो निषिद्धः॥ ६८७॥

## ६९० । घ्यां सौ र वा द्धोः ।

घ्यां ७।, सौ ७।, र ।१।, वा ।१।, द-धोः ६॥ ।

दधोः रेफः स्यात् वा सौ घ्याम्। अवेः अवेत्, अवित्तम् अवित्त। विदाम्बभूव विवेद। [ १६२ ] अस ल भुवि।

## ६९१ । लोपोऽस्त्यसोर्ङिद्रसो रघ्याम् ।

लोपः १।, अस्ति-अ-सोः ६॥, ङित्-र-सोः ७॥, अघ्याम् ७। ।

अस्तेरकारस्य ङिति रे, सस्य च से, लोपः स्यात्, न तु घ्याम्। स्तः सन्ति, असि, एधि, आसीत् आस्ताम्।

---

अत् उ इत्युभयं लुप्तप्रथमैकम्। विदाङ्कुरुतामिति विद तां ङामि क्रञोऽनुप्रयोगे शुपि गुणे अकारस्य उः। रामानन्दकाशीश्वरौ तु क्रञोऽकारस्य शुपाव्यवहितस्यैव सम्भवाद्व्यवहितेऽपि स्यादित्याहतुः। रामतर्कवागीशो न किमप्याह। केचित्तु अणौ परे रे परे यस्मात् परोऽणुर्भवति तस्मिन् रे परे क्रञोऽकार उः स्यादित्याहुः। वस्तुतस्तु तथा वक्तव्ये पुंसः सन् खप्यम्परे इतिवत् क्रञोऽणुपरे रे इत्येवावदिष्यत्। किञ्च नास्ति णुर्यस्य स्थाने सोऽणुः तस्मिन् अणाविति रे इत्यस्य विशेषणम्। शुपो गुणाभावाच्च शुवेव अगुणो र इत्यर्थः। अविदन्नित्यादि द्विषविदेति उस् वा ॥ ६८९ ॥

अवेरिति शपो लुकि हसाङ्ग्रामिति सेर्लोपे त्यलोपे त्यलक्षणमिति दकारस्य रेफपक्षे विसर्गः। एवं रुधिर्धौञ अरुणरित्यादि एवञ्च गृधियुं इत्यस्य यङ् लुकि घ्यां सौ जरीगृध इत्यस्मात् हसाङ्ग्रामिति सेर्लोपे विराममाश्रित्य भभान्तस्येति गस्य घत्वे त्यलोपे त्यलक्षणमिति न्यायात् गुणे अजरीघर्ध इत्यस्य धकारस्यानेन रेफे द्वौ द्वौति पूर्वरेफस्य लोपे तत्पूर्वस्य दीर्घे रेफस्य विसर्गे अजरीघाः रीणी रिणिरणि च कृते अजरिघाः अजर्घाः। एवं वृधु अवरीवाः अवरिवाः अवर्वाः घौऽनित इति दीर्घे तर्द अताताः नर्द अनानाः स्पर्द्धङ् अपास्पाः पक्षे दधोरेफाभावे तु अवेत् अरुणत् अजरीघत् अवरीवत् अतातत् अपास्पत् इत्यादि ॥ ६९० ॥

अस्य स च असौ अस्तेरसौ अस्त्यसौ तयोः। ङिच्चासौ रश्चेति ङिद्रः ङिद्रश्च स च ङिद्रसौ तयोः स इत्यनकारान्तग्रहणात् सि से स इति त्रयाणां ग्रहणं तेन

## ६९२। भूररे।

भूः १।, अरे ७।

अस्तेर्भूः स्यात् अरे। अभूत्।

## ६९३। प्रादुर्गीकः सः षोऽच्ये।

प्रादुर्-गि-इकः ५।, सः ६।, षः १।, अच्-ये ७।

प्रादुःषन्ति प्रादुःष्यात् निषन्ति। [ १६३ ] मृजू ल ष शुद्धौ।

## ६९४। मृजोऽकङिति त्रि र्वा त्वच्यणौ।

मृजः ६।, अकङिति ७।, त्रिः १।, वा ।१।, तु ।१।, अचि ७।, अणौ ७।

अकङिति मृजो त्रिः स्यात् अणौ अचि तु वा। मार्ष्टि मृष्टः, मार्जन्ति मृजन्ति। [ १६४ ] वचौ वाचि।

[ ६५२ ] वच्यस्य खिपतामिति वोच। अवोचत्। उवाच ऊचतुः।

---

लोपः। ङिद्वस्योरिति लिपिकरप्रमादपाठः। किञ्च अरेर्भू आदेशेनैव बाधितत्वात् ङिद्दयहणेनैवेष्टसिद्धौ स्यग्रहणं ज्ञापयति कदाचित् अरेर्भू आदेशो न स्यादिति। तेन लावण्य उत्पाद्य इवास यत्न इति कालिदासः। एधीति जक्षेधीति एधिरादेश अध्यां किं आसीत् आस्तां आसन्॥ ६९१॥

विषयसप्तम्यां सेः सम्भावनायां भूरादेशः। ढ्यामनुप्रयोगादन्यत्राप्यस्ते भूभावं केचित् नेच्छन्तीति धातुप्रदीपः। अतएव लावण्य उत्पाद्य इवास यत्न इति कालिदासः। केचित्तु असजदीप्तावित्यस्य रूपम्। आस दिदीपे इत्यर्थ इत्याहुः। अभूदिति भूस्थापिबेति सेर्लुक्॥ ६९२॥

गेरिक् गीक्। प्रादुश्च गीक् च प्रादुर्गीक् तस्मात्। प्रादुरो गेरिकश्च परस्य अस्तेः सस्य यः स्यादचि ये च परे। अच्ये किं प्रादुःस्थः निस्थः॥ ६९३॥

कङावितौ यस्य स कङित् न कङित् अकङित् तस्मिन्। मृज इति मृजलूष शुद्धौ मृजुषकितु भूषे चेति द्वयोर्ग्रहणम्। मार्ष्टि मार्जयति मार्जति किति मृज्यते ङिति मृष्टः। मृजोऽणौ त्रिरित्युक्तोऽपीष्टसिद्धौ अकङितीति कथमिति चेत् न सनि अनिम पचे खुर्नोनिमीति गणनिषेधे। मिमार्जतीत्यादौ द्वक्षेरप्रसङ्गात वचौ

[ १६५ ] रुदिर् ल घ रोदने ।

## ६९५ । रुद्भ्योऽयो हस्रस्येम् ।

रुद्भ्य: ५॥, अय: ६।, हस्-रस्य ६।, इम् ।१। ।

रुदादे: परस्य अयस्य हसस्य रस्य इम् स्यात् ।
रोदिति रुदित: । अय: किं ? रुद्यात् ।

## ६९६ । दिस्योरम् वा ।

दि-सी: ६॥, अम् ।१।, वा ।१। ।

रुदादे: परयो: दिस्यो: अम् स्यात् वा । अरोदत् अरोदीत्, अरोद: अरोदी: । [ १६६ ] ञि ष्वपौ घ लु स्वप्ने ।
विस्वपिति । [६२५] सवत्वात् न ष: विसुष्वाप दु:षुषुपतु: ।
[ ६२५ ] निर्वत्त्वात् ष: । [ १६७ ] अन घ लु प्राणने ।
प्राणिति प्रानिति । [ १६८ ] श्वस घ लु प्राणने ।
श्वसिति अश्वसीत् । [ ५७६ ] क्षणादित्वात् न ञि: ।
[ १६९ ] जक्ष क्ष लु घभक्षहासयो: । जक्षिति ।

---

इति वच्लौ वाचीत्यस्मादन्यत्वीर्न प्रयोग इति वक्तव्यम् । अवीचत् इति वक्तास्येति ङे वच्यस्मीति वीच् ॥ ६९४ ॥

बहुवचनं गणार्थं गणन्तु रुदाद्यस्तीत्यत्रोक्त: । न य अय तस्य अय: । हस् चासौ रश्चेति हस्र: तस्य । अय: किं रुद्यात् । हस: किं रुदन्ति । अप्राप्तौ विधिरय रोदिष्यतीत्यादौ वसोऽरस्येति इम् स्यादेव ॥ ६९५ ॥

रुदादे: परौ दिसिति घ्या एव घ्यान्तु सिव्यवधानादसम्भव: । दिसाहचर्य्यात् सिरपि घ्या एव । अन्यथा घ्यां कृतस्य सिप्रत्ययस्यापि प्रसज्जेत् । अरोददित्यादि । पक्षे रुदाद्यस्तीत्यनेन ईम् । घ्यान्तु इरित्वात् वा ङे अरुदत् अरोदीत् अरुद: अरोदी: । विसुष्वापेत्यत्र दशस्थादेरिति नियमात् खेर्न षत्वम् । खिनिमित्तकं मूलधातो: षत्वं क्वित्वादित्यनेन स्यादेवेति गोयीचन्द्रादय: । दु:षुषुपतुरित्यत्र बलवत्वादादौ जौ कृते षत्वे च कृते द्वित्वमिति । प्राणिति इत्यत्र वालननिंसेति षत्वं वा ॥ ६९६ ॥

## ६९७। अन्तोऽद्वेः।

अन्तः ६।, अत् ।१।, द्वेः ५।।

द्वेः परस्यान्तोऽत्स्यात्। जक्षति। [५६२] अनुस्सिद्वेरिति, अजक्षुः। [१७०] जागृ क्ष लु जागरणे।

## ६९८। णुरुस्यठ्याम्।

णु १।, उसि ७।, अठ्याम् ७।

द्वेरुसि परे णुः स्यात् न तु ठ्याम्। अजागरुः अजागः। अजागरीत्। जागरामास जजागार।

## ६९९। जाग्रोऽणव्वीण्ङिति क्वसुकाने तु वा।

जाग्रः ६।, अ-णप्-वि-इण्-ङिति ७।, क्वसु-काने ७।, तु ।१।, वा ।१।।

जागर्त्तेर्णुः स्यात् न तु णपि वौ इणि ङिति च, क्वसौ काने तु वा। जजागरतुः। [१७१] दरिद्रा क्ष लु दुर्गत्याम्।

## ७००। दरिद्रो ङिर्हस्रेऽणौ ह्यग्भ्योस्तु वा।

दरिद्रः ६, ङिः १।, हस्रे ७।, अणौ ७।, ह्यक्भ्योः ६॥, तु ।१।, वा ।१।।

दरिद्रातेर्ङिः स्यात् अणौ हसे रे परे, ह्यग्भ्योस्तु वा। दरिद्रितः।

---

अन्त इति षष्ठ्यर्कं हसन्तनिर्देशाददन्ति अन्तु इत्यादीनामपि। जक्षति जक्षतु ददति ददतु। चिकीर्षन्तीत्यादौ शपो लोपे स्थानिवत्त्वान्नान्तोऽत्॥ ६९७॥

अजागरुरिति जक्षादित्वात् द्विसंज्ञायां अनुस्सिद्वेरिति अन उसि अनेन गुणः। ठ्यान्तु जुहवुः। अजागः इत्यादौ गुणे सेर्लोपे रेफस्य विसर्गः। अजागरीदित्यत्र अजिश्विजागुरित्युक्तेर्न वि:॥ ६९८॥

जाग्र इत्यत्र सूत्रत्वात् ऋतो ङो ङुर्न स्यात्। णप् च विश्च इण् च ङिच्चेति णव्वीण् ङित् न अणव् वीण् ङित् अणव्वीण् ङित् तस्मिन्। णौ जागरयति घञि जागरः णमि जागरं जागरं यकि जागर्य्यते यपि प्रजागर्य्य ढीपे जागर्य्यात्। णवादौ तु जजागार जागृविः अजागारि अजागारिषीष्ट जाग्रतः जाग्रति। क्वसौ जजागर्वान्

## ७०१ । आद्ग्रोरालोप्योऽणौ हसे त्वाद्दः ।

आ-द्ग्रोः ६॥, आ ।१।, लोप्यः १।, अणौ ७, हसे ७, तु ।१।, ई ।१।, अदः ६। ।

आ इत्यस्य द्वेस्र आ लोप्यः स्यात् अणौ हसे तु दावर्जमी स्यात् । दरिद्रति ।

## ७०२ । दरिद्र आलोपोऽसनकानेऽरे ध्यान्तु वा ।

दरिद्रः ६।, आलोपः १।, अ-सन्-अक-सने ७, अरे ७, ध्यां ७, तु ।१।, वा ।१। ।

दरिद्र आलोपः स्यात् अरे, न तु सनि अके अने च, ध्यान्तु वा । अदरिद्रीत् अदरिद्रासीत् दरिद्रामास ददरिद्र । ददरिद्रौ इति केचित् । दरिद्र्यात् । [१७२] चकास्ह च लु दीसौ । [६७१] हुझसोर्हेर्धिः चकाधि । [६४] झप्झसोरिति सस्य दः । चकाद्धि ।

## ७०३ । ध्यां दौ त सः ।

ध्यां ७, दौ ७।, त ।१।, सः ६। ।

ध्यां दौ परे सस्य त स्यात् । अचकात् ।

---

दरिद्रितः दरिद्रियः । हसि किं दरिद्रति । अणौ किं दरिद्राति । हाग्भीस्तु जहितः जहीतः बिभितः बिभीतः ॥ ७०० ॥

ई इत्यनुवर्त्तते तेन यङि चाख्यायते इत्यादौ न प्रसङ्गः । यथा क्रीणन्ति क्रीणते जहति मिमते ददति ददते दधति दधते दरिद्रति । हसे तु क्रीणीते जिहीते मिमीते अणौ किं क्रीणाति जहाति । दावर्जनात् दत्ते धत्ते ॥ ७०१ ॥

सन् च अकश्च अनश्चेति सनकानं न सनकानम् असनकानं तस्मिन् । न रोऽरः तस्मिन् । दरिद्र्यात् दरिद्रणीयम् अदरिद्रीत् पक्षे यमरमेति इमसनौ । एवम् अदरिद्रि अदरिद्राथि । ददरिद्र इति णपि अन्तरङ्गत्वादादौ आकारलोपे आदन्तलाभावात् न डौ । जौमरास्तु डौ आदेशं बलवन्तं मत्वा ददरिद्रौ इत्युदाहरन्ति । दरिद्रामासेति दरिद्राकाशेति वाम् । सनादौ तु दिदरिद्रासति दरिद्रायकः दरिद्राणम् । चकाद्धीति हेर्धौ झप्झसोरिति सस्य दः पक्षे धे सलोपो वा चकाधि ॥ ७०२ ॥

## ७०४ । सौ वा ।

सौ ७, वा ।१।।

अचकात् अचकाः । [ १७३ ] शास च्चु शासने ।

## ७०५ । शासुङिद्धसङेऽणौ क्वौ त्वाशासश्च ।

शास-उङ् ।१।, इत् ।१।, हस्ङे ७।, अणौ ७।, क्वौ ७।, तु ।१।, आशासः ६।, च ।१।।

**शास्तेरुङ इत्यादणौ हसि ङे च, क्वौ तु आशासश्च । शिष्टः शाधि अशिषत् ।**

[ १७४ ] चक्ष ङ ल वदे । चष्टे ।

---

सस्य त स्याद्वा व्यां सौ परे । अचकात् अचकाः ॥ ७०४ ॥

शासीरुङ् शासूङ् हस् च ङश्चेति हस्ङं तस्मिन् । क्वौ त्वाशासश्चेति ग्रहणात् शासु इति शासच्चु शासने इत्यस्यैव ग्रहणं तेन आशासु लङ इत्यस्य आशास्ते । यथा शिष्टः शिष्यते शेशिष्यते । क्वौ तु मित्रशीः आशीः । शिष्टः इति आकारस्य इकारः शासवसघसेति षत्वम् । शाधीति हिसहितस्य शाध्यादेशः । अशिषदिति शासत्विद्द्यु-द्दिति ङः ॥ ७०५ ॥

चक्षिङ् तृतीयस्वरानुबन्धोऽयमिति प्राञ्चः । अस्य इकार उच्चारणार्थ इति केचित् छन्दसि नुणागमार्थ इति केचित् । वेदेषूच्चारणभेदार्थ इति केचित् । वह्वस्तु तृतीयस्वरानुबन्धो लिपिकरभ्रमकारित एव किन्तु चतुर्थस्वरानुबन्धोऽयं निष्ठाया इम् निषेधार्थः । तेन वर्जनार्थे ख्याञ् क्शाञादेशयोरप्राप्तौ आचष्टं वर्जनमित्याहुः । वस्तुतस्तु अस्येदनुबन्धो गणकृता नित्यत्वज्ञापनार्थः । तेन वचोऽपि परुषाचरं न च पदेषु संसज्जते इति शाकुन्तले । पथि यदि विपथे वा यत्र यामः कदाचिन्न हि तरुणि रुदीते दिक् पराधीनवृत्तिरिति नैषधे । सन्तः शृणुध्वं हृदये कुरुध्व-मुत्क्षिप्य बाहू परिवारयामीति कण्ठाभरणे । इत्यादौ परस्मैपदिन आत्मनेपदम् । तालैः शिञ्जद्वलयसुभगैर्नर्त्तितः कान्तया मे इति मेघदूते इत्यादावात्मनेपदिनः शतृप्रत्ययः । न विश्वसेत् पूर्वविरोधितस्येति पञ्चतन्त्रे । आश्वसेयुर्निशाचरा इति भट्टौ । अदादेः शपः स्थितिरित्यादि । चष्टे इति [illegible]

## ७०६। चक्ष: क्साञ्ख्याञ्ऽरेऽत्यागोससने।

चक्ष: ६।, क्साञ्-ख्याञ् ।१।, अरे ७।, अत्यागोससने ७।।

चक्ष: क्साञ् ख्याञ् स्यादरे न तु वर्जने उसि असि अने च। अक्सासीत् अक्सास्त, अख्यत् अख्यत। त्यागे तु समचक्षिष्ट।

## ७०७। ठ्यां वा।

ठ्यां ७।, वा ।१।।

चक्सौ चक्से, चख्यौ चख्ये चचक्षे।

[ १७५ ] ईड़ ङ ल स्तुतौ। ईट्टे।

## ७०८। सध्वो रस्येम् जनीड़ीश:।

स-ध्व: ६।, रस्य ६।, इम् ।१।, जन-ईड़-ईश: ५।।

एभ्य: परस्य सस्य ध्वस्य च रस्य इम् स्यात्। ईड़िषे ईड़िध्वे। [ १७६ ] आस ङ ल उपवेशने।

आस्ते। [ ५८२ ] विंजादीत्याम् आसाञ्चक्रे।

[ १७७ ] वस ङ ल आच्छादने। वसिता वस्ता।

[ १७८ ] निसि ङ ल चुम्बने। प्रणिंस्ते प्रनिंस्ते।

---

चक्ष: क्साञ्। क्साञ् च ख्याञ् च तत् न रीऽर: तस्मिन्। त्यागश्च उस् च अस् च अनश्चेति त्यागोससनं न त्यागोससनम् अत्यागोससनं तस्मिन्। वर्जनेऽर्थे उसादौ प्रत्यये विषये च न स्यादित्यर्थ:। अरे इति विषयसप्तमी। तेन विभक्त्युत्पत्ते: पूर्वं क्साञ्ख्याञौ। तयोर्ञानुबन्धत्वादुभयपदमिति क्साञ् इति तालव्यमध्य इति पाणिनिक्रमदीश्वरौ। दन्त्यमध्य इति केचित्। तत्र षत्वाभावस्तु दन्त्यवदादेशविधानसामर्थ्यात्। अक्सासीत् इति यमरमेति इमसनौ। अक्सास्तेति एकाजादन्तत्वात् नेम्। अख्यदिति वक्तख्येति ङे उस्येचीत्यालोप: उसादौ तु चक्षु: नृचक्षा: विचक्षण: ॥ ७०६ ॥

चक्ष: क्साञ् ख्याञ् च स्याद्वा ठ्याम्। विषयसप्तमीयम्। तेन [आदावादेशे ञानुबन्धत्वादुभयपदम्। चक्सौ चक्से चख्यौ चख्ये चचक्षे। ईट्टे इति शपो लुक्

[ १७९ ] सू ङ ल प्रसवे। सूते।

## ७०९। सूतेर्न णु ग्याम्।

सूतेः ६।, न ।१।, णुः १।, ग्याम् ७।

सुवै। [ ५७३ ] वेमूदितीम् वा। असविष्ट असोष्ट।

[ १८० ] शी ङ्ल शयने।

## ७१०। शीङो रे णुः।

शीङः ६।, रे ७।, णुः १।।

शेते शयाते।

## ७११। मान्तो रम् विदस्तु वा।

मान्तः ६।, रम् ।१।, विदः ५।, तु ।१।, वा ।१।।

शीङः परस्य मस्यान्तो रम् स्यात्, वेत्तेस्तु वा।

शेरते। अशयिष्ट। [ १८१ ] अधी ङ्ल अध्ययने। अधीते।

## ७१२। गीङ ष्टीथ्योर्वा।

गी ।१।, इङः ६।, टी-थ्यीः ७॥, वा ।१।।

इङो गी स्यात् वा टीथ्योः परयोः। घंत्वात् न णुः।

अध्यगीष्ट अध्यैष्ट।

---

जन इति जन्मलि चेत्यस्य ग्रहणम्। जनीत्यस्य श्नाव्यवधानात्। व्यतिजज्ञिष्व व्यतिजज्ञिध्वम् ईड़िषे ईड़िध्वे ईशिषे ईशिध्वे। अप्राप्तौ विधिरयं न तु नियमः। तेन जनिता ईड़िता ईशिता इत्यादौ वसोऽरस्येतीम् स्यादेव वस्ता बसितेति वेमसहेतीम् वा। प्रणिंस्ते इति वात्वननिंसनिन्देति वा णत्वम् ॥ ७०८ ॥

सूङ्ल धातोर्णुर्न स्यात् ग्याम्। सुवै इति शुध्वोरित्युव् ॥ ७०९ ॥

अगुणनिमित्ते गुणनिमित्ते च रे इत्यर्थः ॥ ७१० ॥

मस्यान्त मान्त तस्य। शेरते संविद्रते संविदते। समीगम्छेत्यादिना आत्मनेपदम्। शीङ् साहचर्य्यात् विद इति अदादिक एव। तेन धी विदङ् मीमांसि

[illegible]

## ७१३। ठ्यां गा ञाङ्सनोस्तु वा।

ठ्यां ७।, गा ।१।, ञाङ्-सनोः ७॥, तु ।१।, वा ।१। ।

इङो गा स्यात् ठ्यां, ञेः परे अङि सनि च वा।

अधिगजे अध्यगीष्यत अध्यैष्यत।

[ १८२ ] दीधी ङँ ज्वलु देवने दीप्तौ।

## ७१४। दीधीवेव्योर्न गुः।

दीधी-वेव्यः ६।, न ।१।, गुः १। ।

दीध्यै।

## ७१५। लोप्योऽन्तो य्योः।

लोप्यः १।, अन्तः १।, य्योः ७॥ ।

दीधीवेव्योरन्तो लोप्यः स्यात् यकारेवर्णयोः। अदीधिष्ट। एवं [१८३] वेवी ङँ ज्वलु ई-त्त-वत्। [१८४] द्विषी ञ ल वैरे। [६७५] द्विषविदातोऽनुस् वा अद्विषुः अद्विषन्। अद्विष्ट। अद्विक्षत्। [ १८५ ] दुही ञल दोहने। अधुक्षत् अधुक्षत अदुग्ध। एवं [ १८६ ] दिही ञल लेपने। प्रणिदेग्धि अधिक्षत्।

---

वेलात्र गुः प्रथमोपस्थितक्रत्वं परित्यज्य दीर्घकरणादित्यर्थः। अध्यैष्टेति भूयोऽमिति पुनरम्॥ ७१२॥

अङ् च सन् च अङ्सनौ ञेरङ्सनौ ञाङ्सनौ तयोः। ञाङ्सनोस्तु अध्यजीगपत् अध्यापिपत् अधिजिगापयिषति अध्यापिपयिषति॥ ७१३॥

दीधी च वेवी चेति समाहारे दीधीवेवी तस्य। दीधीवेव्य इति षष्ठ्यकं अन्यथा परसूत्रे यथासंख्यं स्यात्। एतयोर्गुर्न स्यात् सर्वत्र दीध्यै एवं दीध्यनीयमित्यादि। वेव्यै इत्यादि॥ ७१४॥

य च इश्च यी तयोः। दीध्यते अदीधिष्ट दीर्घे तु दीधीत इत्यादौ अन्तलोपा-

[ १८७ ] ऊर्णुं ञल आच्छादने।

७१६। वोर्णोः पिद्धसे णुः।

वा ।१।, ऊर्णोः ६।, पित्-ह्रस्-रे ७।, णुः १।।

ऊर्णोर्णुः स्यात् वा पिति ह्रसे रे। ऊर्णोति ऊर्णौति

[ ६८० ] रपिद्धस्युत इति ञिः।

७१७। घ्याम्।

घ्याम् ७।

ऊर्णोर्णुः स्यात् पिति ह्रसे घ्याम्। और्णोत्।

७१८। णूव्ञिष्व्याम्।

णु-उव्-ञिः १।, व्याम् ७।

उर्णोर्णुः उव् ञिः एते स्युः व्याम्।

और्णवीत् और्णुवीत् और्णावीत्।

७१९। नाजन्तादेरादिर्द्विः।

न ।१।, अजन्तादेः ६।, आदिः १।, द्विः १।।

अन्तादिस्थिताचो धो-रादिर्द्विर्न स्यात्।

---

लोप्योऽन्तो य्योरिति कृतं ज्ञापयति दीधीवेव्योर्न क्वापि ह्रस्विरिति तेन णके आदीध्यकः इति। एतयोर्वैदिकयोरपि पदसाधनं ऋर्वकर्मानुरोधात्। अद्विष्टेति लद्विषो ञ वैरे ञित्वात् आत्मनेपदं स्यात् अद्विक्षदिति ह्यष इति सक् अधुक्षत अदुग्धेति गुहदुहदिहेति न सिः सक् वा ॥ ७१५ ॥

ऊर्णोतेर्णुः स्यात् पिति ह्रसे रे। पिति किं ऊर्णुतः। यङ् लुकि। प्रोर्णोनोति प्रर्णोनौति ॥ ७१६ ॥

नित्यार्थं विधानम् ॥ ७१७ ॥

णुश्च उव् च ञिश्च णूव्ञिः। सूत्रत्वात् पुंस्त्वम् ॥ ७१८ ॥

अचौ अन्तादौ यस्य सोऽजन्तादिः तस्य। यथा अटिटिषति इटिटिषति उचिखिषति इत्यादौ ॥ ७१९ ॥

७२०। स्वादौ नवद्रोऽये।

स्वादौ ७।, न-व-द-र: १॥, अये ७।।

स्वादौ स्थिता न व दरा द्विर्न स्युर्न तु ये। ऊर्णुनाव।

७२१। ङिदिम् वोर्णोः।

ङि-त् ।१।, इम् ।१।, वा ।१।, ऊर्णोः ५।।

ऊर्णोः पर इम् ङित् स्यात् वा। ऊर्णुविता ऊर्णविता।

[ १८८ ] ष्टु ञल स्तुतौ।

७२२। पिद्धस्रस्येम् ब्रुवो यङ्लुग्रुतुस्नो स्तु वा।

पित्-हस-रस्य ६।, ईम् ।१।, ब्रुव: ५।, यङ्-लुक्-रु-तु-स्नो: ५।, तु ।१।, वा ।१।।

ब्रुव: परस्य पितो हसो रस्य ईम् स्यात् यङ्लुगादेस्तु वा। स्तवीति स्तौति, अभिष्टौति। न्यष्टावीत् न्यस्तावीत्। अस्तोष्ट। तुष्टुव। स्तविता स्तोता।

[ १८९ ] टु क्षु ल क्षुते। क्षविता।

[ १९० ] रु ल ध्वनौ। रवीति रौति। रविता रोता।

---

न व द रा यथा। उन्दिदिषति उजिजिषति अडिडिषति अर्चिचिषति। अये इति यकारे परे ये नवदरा: ते यकारेण योगे संयोगादिस्थिता अपि द्वि: स्युरेवेत्यर्थ:। यथा ऋ अरार्य्यते अर्य्यमाख्यातवान् आरिर्य्यत् इत्यादौ रेफस्यापि द्वित्वम्। अत्रापि अजन्तादेरित्यनुवर्त्तते। तेन अन्तादिस्थिताचो धो: स्वस्वादौ स्थिता ये नवदरास्ते द्विर्न स्युरित्यर्थ:। अन्यथा द्राल दद्री दिद्रासति इत्यादावपि दकारस्य द्वित्वनिषेध: स्यात्। ऊर्णुनावेति ऊर्णुलआदीनां नकार आदौ दन्त्य आसीत् पश्चात् रेफयोगात् मूर्द्धन्य:। तेन रेफं द्वित्वा णु इत्यस्य द्वित्वे पूर्वनकारस्य तथैव स्थिति: परनकारस्य तु निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात् पुनर्दन्त्यत्वमिति॥ ७२०॥

ऊर्णुवितेति इमो ङित्वपक्षे श्रु ध्वोरित्युव्॥ ७२१॥

[१९१] तु ल वृत्ति-हिंसापूर्त्तिषु।

तौति तवीति। तोता तविता।

[१९२] ब्रू ञल उक्तौ। ब्रवीति।

७२३। पञ्चतिप्पञ्चणब्वाहश्च।

पञ्च ।१॥, तिप् ।१॥, पञ्च ।१॥, णप् ।१॥, वा ।१।, आहः ११, च ।१।।

ब्रुवः परेषां पञ्चानां तिबादीनां पञ्च णबादयो वा स्युः, ब्रुवश्चाहः स्यात्। आह आहतुः आहुः।

७२४। हस्त थि।

हः ६।, त ।१।, थि ७।

आहो हस्य तः स्यात् थे परे। आत्थ आहथुः। पक्षे सुगमम्।

७२५। वचोऽरे।

वचः ११, अरे ७।

ब्रुवो वचः स्यात् अरे। अवोचत् उवाच ऊचे।

---

पिचासौ हस् चासौ रश्चेति पिङ्ग्स्रः तस्य। यङ् लुक् यस्मात् स यङ्लुक् यङ्लुक् च रुश्च तुश्च स्तुश्चेति तस्मात्। वीभवीति वीभोति रवीति रौति तवीति तौति स्तवीति स्तौति। रुतुस्तूनां छन्दस्येवेत्येके। अभिष्टौतीति गीक इति षत्वम्। व्यष्टावीदित्यादि स्तुधीरितीमि निविपरिस्वन्जेति वा षत्वम्। पि किं अस्तौष्ट आदौ गुणे ऋक्षपरत्वाभावात् न सिलोपः। तुष्टुवेति नेमसुमिति न इम्। स्तोतेत्यादि वेम्सहेतीम् वा चवितेति नेमिकाजेत्यच चुवर्जनादिम्। रौतेत्यादि रुदसुनीस्वठ्या इति वेम्। तौतेत्यादि वेम् सहेतीम् वा॥ ७२२॥

पञ्चानां तिपां समाहारः पञ्चतिप् पञ्चानां णपां समाहारः पञ्चणप् आहादेशो णबादादेश पञ्च एव। स्थानिवदादेश इति न्यायात् णबादौ न द्वित्वं घपश्च नेम् नाप्यतीतकालप्रतीतिः। तथाच प्राह स रामं भरतोऽपि धर्मानिति भट्टिः॥ ७२३॥

पिङ्ग्स्रसेमित्यत्र ब्रुवः स्वरूपग्रहणात् आत्थ इत्यत्र न इम्॥ ७२४॥

अरे इति विषयसप्तमी। तेन क्यां वचादेशे सति वक्ष्यस्य ख्येति ङ्प्रत्ययो

## ह्वादिः ।

[ १९३ ] हुलि होमे ।

### ७२६ । ह्वादिः रे द्विः ।

ह्वादिः १।, रे ७।, द्विः १। ।

**ह्वादिर्द्विः स्यात् रे परे । जुहोति ।**

### ७२७ । ह्वो वच्यणौ ।

ह्वः ६।, व् ।१।, अचि ७।, अणौ ७। ।

**ह्वोरुकारस्य व् स्यात् अणौ अचि रे । जुह्वति जुहुधि ।**

---

भविष्यतीति सम्भाव्य ङप्रत्ययप्राप्तेः पूर्वमेव वचादेशः । अन्यच्च अप्रत्ययोत्पत्तिः सम्भाव्य वचादेशः । ततः सर्वत्र ब्रूञोऽञानुबन्धत्वात् उभयपदमिति । यथा अवोचत् अवोचत उवाच ऊचे उच्यात् वक्षीष्ट इत्यादि । विब्रूतिः कटके क्षताजनैरिति तु अरविहितकार्य्यस्यानित्यत्वात् । एवं क्वङीः कभाव इत्यनेन कप्रत्यये ब्राह्मणं ब्रूते ब्राह्मण ब्रुवः । अतएव सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । अधीते शत साहस्रसंख्यं वेदपारगे इति पठन्ति ॥ ७२५ ॥

---

ह्वादिर्द्विः स्यात् रे परे । जुहोतीति रपिङ्स्युत इत्यत्र द्विवर्जनात् न त्रिः । ह्वादिस्तु । हुलि होमे जिलिभी तु भये स्यात् ह्रीलि तु लज्जे पृलि रक्षणे स्यात् । ओहालि त्यजने ऋलिं गत्यां घृलिं तु सेके दीपनक्षत्याम् । हृलिः बलात्करणे लिंस गत्यां भस लि भर्त्सनकरणे द्युत्याम् । कित लि किलिं ज्ञाने कथितस्तु लिधावनकर्म्मणि विदितः । धन लि धान्ये धिष लि ध्वनने जन्मलि च तु विदितो जनने ॥ णिजिरलिञौ शौचे पोषे स्यात् विजिरलिञौ तु पृथग्भावे स्यात् । विषिर्लिञौ तु व्याप्तौ व्याप्त्यां दाञ लि दाने धाञ लि धृत्याम् । भृञ लि तु पोषणकर्म्मणि धृत्यां माङलि शब्दे हाङलि गत्याम् । गालिं स्तुत्यां ह्वादौ पठिताः विंशतिरिति पञ्च च बुधविदिता इति ॥ ७२६ ॥

ह्वोः ह्वः तस्य । उवो बाधकोऽयम् । जुह्वति । अणौ किं जुह्वानि रे किं

## ७२८। पशाम् वा भी क्री भृ ह्री ष्याम्।

पशाम् ।१।, वा ।१।, भी-क्री-भृ-ह्रीः ५।, ष्याम् ७।

एभ्यः पशाम् वा स्यात् ष्याम्। जुह्वामास जुहाव।

[ १९४ ] ञि भी ह्वि भीत्याम्। बिभेति।

[ ७०० ] दरिद्रो ङिरित्यादि, बिभीतः बिभितः बिभ्यति बिभयामास बिभाय। [ १९५ ] ह्री लि लज्जायाम्॥ जिह्रयामास जिह्राय। [ १९६ ] पृ लि पूर्त्तौ॥

## ७२९। पॄभाद्रे ङिः खे रे।

पृ-ऋ-भृ-आदेः ६।, ङिः १।, खेः ६।; रे ७।

पृ-ऋ-भृ-माङ-हाङां खेर्ङिः स्यात् रे। पिपर्त्ति॥

## ७३०। पुर्घौ वा।

पुः ६।, घेः १।, वा ।१।

पिपूर्त्तः पिपृतः। पपरतुः पप्रतुः।

[ ५७९ ] णुमत्त्वात् न एः। [ १९७ ] ओहा कलि त्यागे॥ जहाति जहितः जहीतः, जहति।

---

जुह्वः। ननु ह्री वचीति कृतेऽपि गुणविधेर्विशेषत्वेन बलवत्त्वात् जुह्वानीत्यादौ गुणस्यैव प्राप्तौ अणाविति सुखार्थमिति काशीश्वरः। वस्तुतस्तु हुधातुसम्बन्ध्युकारस्थानिकत्वादज्मात्रनिमित्तकत्वाच्च विशिष्टविधिना ह्रीवचीत्यनेन इङ्स्थानिकत्वादज्झस्निमित्तकत्वाच्च सामान्यस्य गुर्घूङ्स्येत्यस्य बाधित्वात् जुह्वानि इत्यादौ वकारस्यैवापत्तिरिति अणावित्युक्तम्॥ ७२७॥

शित्त्वाद्रसंज्ञायां द्वित्वं पित्वाद्गुणः। बिभयामास बिभाय जिह्रयामास जिह्राय बिभरामास बभार जुह्वामास जुहाव। बिभ्यतीति अन्तोऽद्द इः॥ ७२८॥

पृश्च ऋश्च भादिश्च तत्तस्य। भादिस्तु भृप्रभृतिह्रादिगणसमाप्तिपर्यन्त इत्यत आह भृ माङ् हाङामिति। पिपर्त्ति इयर्त्ति बिभर्त्ति मिमीते जिहीते। रे किं पपार इत्यादि॥ ७२९॥

पुरिति षष्ठ्येकम्। खे रे इति च नानुवर्त्ततेऽनिष्टत्वात् पृलि पालने इति

## ७३१ । ह्नाकोऽन्तलोपः ख्याम् ।

ह्नाकः ६।, अन्तलोपः १।, ख्याम् ७।।

जह्यात् ।

## ७३२ । ह्नौ ङा वा ।

ह्नौ ७।, ङा ।१।, वा ।१।।

ह्नाको ङा स्याद्वा ह्नौ । जहाहि जहिहि जहीहि । हेयात् ।

[ १९८ ] ऋलिं गत्याम् । इयर्त्ति ।

[ १९९ ] जन मलि ङ जनौ । जज्ञिषे जज्ञिध्वे ।

[ २०० ] निजिरौ ञ लि पोषणे शोधने च ।

## ७३३ । निजां खे रे णुः ।

निजां ६।।।, खेः ६।, रे ७।, णुः १।।

निजविजविषां खेर्णुः स्यात् रे । नेनेक्ति नेनिक्तः ।

---

ऋकारान्तस्य दीर्घः स्याद्वा एवं सर्वत्र । क्षमते ञिपॄलि तु पालने इति दीर्घान्ते स्थितेऽपि दीर्घविधानमस्य सर्वसम्मतत्वात् । पिपूर्त्त इति दीर्घे कृते ऋदिरणाविन्युरि र्व्यनच् तद्योति दीर्घः । ऋकारान्तमेव केचित् दीर्घान्तं पठन्ति तेन पृथग् धातुर्नायम् । अतएव ऋकारान्तग्रहणे नैवास्य ग्रहणात् पृक्षादेरिति खेर्ङिः । पपरतुरिति दीर्घपक्षे ऋतो णः । जह्वित इति दरिद्रो ङिरिति ङिः । जहीतः इति ग्राद्योरिति ईः । जहतीति अन्तोऽद् वेः ॥ ७३० ॥

ह्नाकोह ख्यामिति कृतेऽपीष्टसिद्धौ अन्तलोपगौरवं ज्ञापयति ह्नाको हसे रे परे आदौ द्वित्वं पश्चात् कार्य्यान्तरमिति । तेन जह्यादित्यत्र आदौ द्वित्वे झभखथेति खेराकारस्य अकारः । अन्यथा प्रागच्कार्य्याद्‌द्विरिति नियमेन पश्चात् द्वित्वे खेरदन्तत्वं न सम्भवतीति । एवं जह्वितः जहीतः इत्यादावपि आदौ द्वित्वे पश्चात् दरिद्रो ङिरिति ङिः ग्राद्योरिति ईश्च इति ॥ ७३१ ॥

जहाहीत्यादि आदौ द्विः पश्चात् ङा ङिः ईश्च । इयर्त्तीति ऋलिं गत्यां पृक्षादेरिति खेर्ङिः खिय्वोरिति इर् मूलधातोर्गुणः । एवं इयृतः इयृति । द्विपि ऐयः ऐयृताम् ऐयरुः । जज्ञिषे इत्यादि वैदिकत्वेन व्यत्ययादात्मनेपदे सध्वोरस्येतीम् ॥ ७३२ ॥

## ७३४। न ह्वाङोऽचि।

न ।१।, ह्वाङः ६।, अचि ७।।

ह्वेरुङो गुर्न स्यादचि परे। नेनिजानि। रे किम्। निनेज।

एवं [ २०१ ] विजिरौ ञ लि विवेके।

[ २०२ ] विषि लिं व्याप्तौ। अविषत् अविक्षत्।

[ २०३ ] डु दा ञ लि दाने।

प्रणिददाति। अद इत्युक्तेरालोपः। दत्ते।

## ७३५। ह्वो दा-धोर्दे-धे हौ।

ह्वोः ६॥, दा-धोः ६॥, दे-धे ।१॥, हौ ७।।

ह्वेर्दाञो ह्वेर्धाञो दे धे च स्यात् हौ। देहि।

## ७३६। स्था-दोर्ङिंष्टीमे न गुः।

स्थादोः ६॥, ङिः १।, टीमि ७।, न ।१।, गुः १।।

स्था-दो ङिः स्यात् टीमि, तस्य च न गुः। अदित अदिषाताम्।

[ २०४ ] डु धा ञ लि धारणे। प्रणिदधाति।

---

बहुवचनं गणार्थं गणश्च ह्वाद्युभयपदिसमापकपर्यन्त इत्यत आह निजविजविषामिति। किन्तु विजिर्लिं ञौ इति जान्तौ यौ धातुः स विचिलिञौ इति चान्तः कैश्चित् पठ्यते। तेन विजग्रहणेनैव विचः प्राप्तौ विचोऽपि ग्रहणमिति बोध्यम्। नेनेक्ति वेवेक्ति वेवेष्टि। रे किं निनेज विवेज विवेच विवेष ॥ ७३३ ॥

नेनिजानि वेविजानि वेविचानि वेविषाणि। एवं यङ् लुकि लेलिहीति मोमुचीति नर्नर्तीति। उङः किं जिह्रयाणि जुहवानि पिपवानि यङ् लुकि नेनयीति बोभवीति चर्करीति। रे किं निनेज इत्यादि। अचि किं नेनेक्तीत्यादि। अविषदिति विषिर्लिञौ ग्रासलिह् द्युदिति ङः। पचो ह्मष इति सक् अविक्षत्। प्रणिददातीति गदनदेति णत्वम् ॥ ७३४ ॥

दाधोरिति डुदाञलि डुधाञलि इति द्वयोर्ग्रहणम् अन्येषां हौ परे हित्वा-

## ७३७ । धो द् धोऽन्तलोपे तथि ।

ध: ६॥, द ।१।, ध: १।, अन्तलोपे ७।, त-थि ७।।

धाञो दस्य ध: स्यात् तथयो: परयो:, अन्तलोपे सति। धत्ते। धेहि। अधित। [ २०५ ] टु डु भृ ञ लि भृतिपुष्ट्यो:। बिभृत: बिभ्रति। बिभरामास बभार। [२०६] मा ङ लि शब्दे। प्रणिमिमीते मिमाते मिमते।

एवं [ २०७ ] ओ हा ङ लि गतौ।

### इति अदादि-पाद:।

---

सम्भवात्। देस धेश्च देधे इति लुप्त-प्रथमाद्विवचनान्तं यथासंख्यार्थम्। देहि धेहि ॥ ७३५ ॥

अत्र दासंज्ञैव। प्रास्थित प्रास्थिषाताम् अदित अदिषाताम् अधित अधिषातां प्रणिदधातीति गदनदेति णत्वम् ॥ ७३६ ॥

धत्ते इति आद्द्योरित्याकारलोपे खिर्दस्य ध:। एवं धत्त: धत्थ: इत्यादि धत्से धद्ध्वे इत्यादौ तु झभान्तस्येत्यादिना दस्य ध:। धो द धोऽणौ तथि इति कृतेऽपीष्ट-सिद्धौ अन्तलोपे इति गौरवं कथमिति चेन्न यङ् लुकि दाधीत: दाधीतवान् इत्यत्र दा मा गे इत्यनेन ङी आदेशे कृतेऽपि दस्य धकारापत्ते:। बिभरामासेति पश्चामि खिर्ङि:। प्रणिमिमीते इति आद्द्योरिति ई: खिर्ङि: पतपददामेति णत्वम्। एवम् आते—, मिमाते अन्ते—, मिमते। एवं हाङ लि जिहीते जिहाते जिहते ॥ ७३७ ॥

इति अदादिपाद:।

# द्वितीयः पादः—दिवादिः ।

---

[ २०८ ] दिव्यु क्रीड़ायाम् ।

**७३८ । दिव सु तुद रुध क्र्यादे र्यन् न्वनणाः श्विद्वे रे ।**

दिव—क्र्यादेः ५।, यन्—नाः १।।।, श्वित् ।१।।।, घे ७।, रे ७। ।

एभ्यो घेऽर्थे यन् नु श्न नण् ना एते रे परे क्रमात् स्युः, ते च श्वितः । दीव्यति । [२०९] षिव्यु तन्तुसन्तती । निषीव्यति । न्यषेवीत् न्यसेवीत् । [२१०] नृती य नर्त्तने ।

**७३९ । नृत् कृत् चृत् छृत् तृदोऽरसोऽसेरिम् वा ।**

नृत्—तृदः ५।, अरसः ६।, असेः ६।, इम् ।१।, वा ।१। ।

एभ्यः परस्यारस्य सिवर्जस्य सस्य इम् स्यात् वा । नर्त्तिष्यति नर्त्स्यति । सौ तु अनर्त्तीत् । [२११] त्रसी य भये ।

---

दिवश्च सुश्च तुदश्च रुधश्च क्रीश्चेति ते आदयो यस्य तस्मात् । यन् च नुश्च श्नश्च नण् च नाश्च ते । श्वित्करणात् रसंज्ञायां अपिद्वत्वात् ङिन्त्वेश्यनादौ परे न गुणः । एते शपो बाधकाः । श्नमिति मूर्द्धन्यणकारानुबन्धो रुधादेरन्त्यादचः परो भवन्नपि शपं बाधते । अत्र प्रकृतिप्रत्यययोरर्थाभिधाने साहचर्य्यस्य अनेनैव सिद्धत्वात् शपबाधकानां श्यनादीनां साहचर्य्याच्च श्नोऽनुरोधात् क्र्यादेरित्यस्य षष्ठ्यन्तत्वेन वक्तुमुचितत्वेऽपि श्नादीनामनुरोधात् पञ्चम्यन्तत्वं विरुद्धधर्म्मसमवाये भूयसां स्यात् सधर्म्मकत्वमिति जैमिनिसूत्रात् । दीव्यति श्यनोङित्वात् गुणाभावे र्व्यंनच्यतयोति दीर्घः । निषीव्यतीति गीक इति षत्वम् । न्यषेवीदित्यादि निवि-

[ ५९४ ] क्रमक्लमेति श्यन् वा, त्रस्यति त्रसति । तत्रास त्रेसतुः तत्रसतुः । २१२ ] जॄ इय्य जरायाम् ।

जीर्य्यति । अजरत् अजारीत् । जेरतुः जजरतुः । जरीता जरिता ।

[ २१३ ] शो य निशाने ।

## ७४० । यन्योशमादिमिदो लोपर्घणु ।

यनि ७, श्री-शमादि-मिदः ६।, लोप-र्घ-णु १।।

ओकारस्य लोपः शमादेर्घो मिदेर्णुः स्यात् यनि । श्यति । अशात् अशासीत् । एवं [ २१४ ] एवं छो य लूनौ । [२१५] षो य नाशे । प्रणिष्यति । न्यषात् न्यषासीत् । सेयात्

[ २१६ ] दो य छेदने । प्रणयदात् देयात् ।

[ २१७ ] राध्यौ ण हिंसे ।

रेधतुः रराधतुः । वधार्थः किम्, आरराधतुः ।

[ २१८ व्यध्यौ ताड़े । विध्यति । विव्याध, विविधतुः ।

[ २१९ ] पुष्यौल्ट पोषणे ।

[ ५६५ ] शासुलिद्युतल् पुषादेर्ङष्टौपे इति ङः । अपुषत् । [२२०] श्लिष्यौ ञिल्ट श्लेषे । अश्लिषत् । आलिङ्गने तु अश्लिक्षत् ।

---

नृत् क्नत् । नृत्य नर्त्तने क्नती ध वेष्टे क्नतीशप छिदि इति द्वयम् । चृत् श हिंसे ग्रन्थे चृत् कि सन्दीपने इति द्वयम् । कृदुञधि देवने छृद् कि सन्दीपने इति द्वयम् । कृदुञधिर्नादरे च । नर्त्तिष्यति नर्त्स्यति कर्त्तिस्यति कर्त्स्यति चर्त्ति-ष्यति चर्त्स्यति छर्दिस्यति छर्त्स्यति तर्दिष्यति तर्त्स्यति सौतु अनर्त्तीदित्यादि। जीर्य्यतीति ऋदिरणाविति इर् व्यंनच्तयीति दीर्घः । अजरदित्यादि शासलिद् द्युदिति ङे दृश्रीरिति गुणः । पचे सौ पे वृद्धिः । जजरतुरित्यादि ऋतीणः पचे खिलोपादि । जरीतेति वृतो वेम इति दीर्घः ॥ ७३९ ॥

[ २२१ ] रध्यू ल्ट पाकहिंसयोः।

७४१। नुण् रधो मुचां नशमस्जो रभलभोऽनठीमच्ये झस्यरठ्यचि।

नुण् ।१।, रधः ६।, मुचां ६॥, नश्-मस्जः ६।, रभः-लभः ६।, अनठीमचि ७।, ए ७।, झसि ७।, अरठ्यचि ७।

रधष्ठीवर्जम्वर्जेऽचि। मुचादेरत्ये, नश-मस्जोर्झसि, रभलभोरठीवर्जेऽचि, नुण् स्यात्। अरन्धत्। रधिता रद्धा। थ्यान्तु ररन्धिव रेध्व, ररन्धिम रेध्म। [ २२२ ] तृप्यूञिल्ट प्रीणने। अतर्पीत् अत्राप्सीत् अताप्सीत् अतृपत्। एवं [ २२३ ] दृप्य, दर्जि हर्षाहङ्कारयोः। [ २२४ ] मुह्यू जिल्ट वैचित्त्ये। मोहिता [ १७८ ] मुहां घङ् वाभौ। मोग्धा मोढ़ा।

---

स्यति शमादिश्च। शमु अमू दमुश्चापि चमु तमु भमुश्च क्लमुमदीति च मनीषिभिर्निगदितः शमादिर्गणः। शाम्यति श्राम्यति दाम्यति चाम्यति ताम्यति भाम्यति क्लाम्यति माद्यति। मिदस्तु मेद्यतीति। अशादित्यादि घेशाच्छासाघ्रेति सेर्लुक्। पचे यनरमीति इम् सनौ। प्रणिष्यति इति दामासीहन इति णत्वात् गीक इति षत्वम्। न्यषादित्यादि घेशाच्छासाघ्रेति सेः पेर्लुक् वा अम्यपीति षत्वं सेयादिति दामा गै इति ङे अणदादिति भूस्थापिबेति सेर्लुक् पतपददामेति णत्वम्। देयादिति दामागै इति ङे। रेधतुरिति अनेकार्थत्वादिह राधेर्वधार्थत्वे विधिबलादातोऽप्येत्वम्। आरराधतुरिति। आराध्यतेः सेवार्थत्वात्। विध्यतीति ग्रहस्वपाद्योरिति जिः। विव्याधेति व्यथग्रहेति जिः। विविधतुरिति व्यथग्रहेति खेर्जिः ग्रहस्वपाद्योरिति मूलस्य जिः। अश्लिषत् इति पुषादित्वात् ङः। अश्लिक्षदिति हशष इति सक्॥ ७४०॥

न ठी अठी अठ्या इम् अठीम् नास्ति अठीम् यत्र अनठीम् अनठीम् चासौ अचेति अनठीमच् तस्मिन्। अनठीमचि रश्च ठी च रठ्यौ न रठ्यौ अरठ्यौ तयोरच् अरठ्यच् तस्मिन्। अनठीमचीति रध्यते ठीमि सामान्ये अचि च नुण् स्यादित्यर्थः। यथा ररन्धिव ररन्धिम थ्या अचि ररन्ध अन्धाचि रन्धयति अरन्धि रन्धनम्। अठीमिति न रधादित्वादिमि रधिष्यति रधिता रधितव्यम। किञ्च ठीमचि

[२२५] नशश्लृ यू नाशे।

## ७४२। नश नेश वा ङे।

नश ।१।, नेश ।१।, वा ।१।, ङे ७।।

प्राणेशत् प्राणशत्। नशिता प्रनंष्धा प्रनंष्टा। [५४९] अशान्तत्वात् न णः। [२२६] शमु श्य इर् उपशमे। प्रणिशाम्यति। [२२७] क्लमु भिर् ग्लानौ। क्लाम्यति क्लामति। [२२८] असु इर् क्षेपे। आस्थत्। [२२९] यसु इर् यत्ने।

यस्यति यसति, संयस्यति संयसति। अन्यत्र। प्रयस्यति। [२३०] लुभ्य इर् गार्द्ध्ये। लोभिता लोब्धा। [२३१] ञीर् य मिदा स्नेहे। मेद्यति। [मिदेर्गुः] [२३२] षू यो ङ सूतौ। असविष्ट असोष्ट। [२३३] श्रो दीङ य क्षये।

---

इत्युक्तोऽपीष्टसिद्धौ अचत्वादेव ठीमः प्राप्तौ ठीमो ग्रहणादेव अनिमो वर्जने च तु गौरवं ज्ञापयति रध्नतेः पुषादित्वात् ङे नुणि क्ते हसुङ्न इत्यनेन नस्य लोपो न स्यादिति। तेन अरन्धदित्येव न च नुण्करणसामर्थ्यात् नलोपो न स्यात् इति वाच्यं रन्धयतीत्यादौ नुणः सामर्थकत्वात् सुचामिति बहुवचनं गणार्थम्। गणश्च सुञ्चति लुम्पि लिम्पौ च विन्दिः सिञ्चति कृन्तती। खिन्दतिः पुंसतिश्चैव सुचादावष्टधातव इति। सुचादेरत्ये इति तुदादित्वात् जाते शप्प्रत्यये परे इत्यर्थः तेन मुञ्चति इत्यादि। अन्यत्र घञि मोकः। नशमस्जोर्भसे नंष्टा नङ्क्ष्यति मङ्क्ता मङ्क्तुं मङ्क्ष्यति। रभलभोस्तु रम्भयति अरम्भि आरम्भः लम्भयति अलम्भि आलम्भः रध्यौ रठितु रभते रेभे लभते लेभे। अतासींदित्यादि ञिण तृप्यू प्रीणने दि कृषन्तृपेति सिपक्षे ऋकारस्य वृद्धिः। वद्रोऽकिदिति रेफपक्षे अत्राप्सीत् रधादित्वात् इम् गुणपक्षे अतर्पीत् पुषादित्वात् ङे अतृपत्। मोहितेति रधादित्वादिम् वा। पक्षे मुहादित्वात् घडि मोग्धा घडोऽप्राप्तिपक्षेऽन्तरङ्गत्वात् परत्वाच्चादौ गुणे ह्रोढोभाविति हस्य ढे ढभात्तयोर्धों ध इति तकारस्य धे ष्टुभिरिति धस्य ढे ढोढि इति ढलोपे पूर्वङ्खालाभान्न दीर्घः मोढा ॥ ७४१ ॥

नश। नश् लृ नाशे इत्यस्य नेश् स्याद्वा ङे। प्राणेशत् इत्यादि शान्तनशेति णत्वम्। नशितेति रधादित्वात् इम वा। पक्षे नशमस्ज इति नुणि शकाजिति

**७४३। दीङष्णां यन् यण्णौ ङा सनि तु वा।**

दीङः ६।, ष्णां ७।, यन् ।१।, यप्णौ ७।, ङा ।१।, सनि ७।, तु ।१।, वा ।१।।

दीङः ष्णां यन्, यपि णौ च ङा, सनि तु वा स्यात्। अदास्त दिदीये। [ २३४ ] जनी स्य ङ प्रादुर्भावे। जायते।

**७४४। जनवधः सेममोऽकमवमाचमो ञ्णित्क्रदिणि स्वोऽमयम विश्रमस्तु वा।**

जनवधः ६।, सेमम: ६।, अ-कमवमाचमः ६।, ञ्णित्-क्रदिणि ७।, स्वः १।, अम-यम-विश्रमः ६।, तु ।१।, वा ।१।।

जनो वधः सेमोऽमन्तस्य च कमवमाचम-वर्जस्य स्वः स्यात् ञ्णिति क्रति इणि च, अम यम विश्रमस्तु वा। अजनि अजनिष्ट जज्ञे। [ २३५ ] दी पी ङ्य ऋ दीपने।

अदीपि अदीपिष्ट। एवं [ २३६ ] पूरी ङ्य प्यायने।

[ २३७ ] पद्यी ङ गतौ।

[६४२] पदस्तनीण् वे इति। प्रण्यपादि अपत्साताम्।

[ २३८ ] बुध्यी ङ अवगमने। अबोधि अबुद्ध।

[२३९] नह्यी ञ्य बन्धे। [२३७] नह्यो धङ्भौ। अनात्सीत् अनद्ध।

इति दिवादिपादः।

---

षङ् तस्य टत्वे प्रनंष्टा। पचे गुणि मुह्यादित्वात् घङि ढभादिति तस्य धे झप् झसोरिति घस्य गे नस्यानुस्वारे तस्य च ङकारे प्रनङ्ग्धा अप्रान्तत्वात् न णः। प्रणिध्यास्यति इति वपवहश्रमचीति णत्वं श्रमादित्वात् दीर्घः। क्राम्यतीति क्रमक्लमेति श्यनि श्रमादित्वात् दीर्घः। आस्थदिति असु इर क्षेपे वक्तयस्येति ङे वच्यस्य-श्पतामिति अस्थः। लोभ्वा इत्यादि वेमसहेतीम् वा। सेयति इति यन्यो श्रमादीति गुणः। असविष्टेति वेमूदितीम् वा॥ ७४२॥

यप् च णश्च यब्णा सूत्रत्वादेकत्वं तस्मिन्। दिदीये दिदीयाते। यपि प्रदाय णारिति गुणसाधनयोग्यः। अदास्त दास्यते दापयति दाता। सनि दिदासते

# तृतीयः पादः—स्वादिः ॥

[ २४० ] षु ञ न बन्धे ।

सुनोति अभिषुणोति सुनुतः सुन्वन्ति । [ ६२३ ] सुस्तुधोरितीम् । व्यषावीत् । असविष्ट असोष्ट । सुषुविव । विसविष्यति विसोष्यति । [ ५७२ ] स्यान्तस्वात् न षः ।

[ २४१ ] डु मि ञ न क्षेपे ।

## ७४५ । मिम्योर्यण्णौ ङाऽखल्लि लियस्तु वा ।

मिम्योः ६॥, यप्णौ ७, ङा ।१, अ-खल्-अलि ७, लियः ६।, तु ।१।, वा ।१।

अमासीत् प्रख्यमास्त ।

---

जनश्च बध् च जनबध् तस्य कमश्च वमश्च आचम् च ते, न विद्यन्ते ते यत्र स तस्य । सेम् चासौ अम् चेति सेमम् तस्य । ञ च णश्च ञणौ ञणावितौ यस्य सञ्णित् ञिणच्चासौ क्तश्चेति ञिणत्क्तत् ञिणत्क्तश्च इण् च ञिणत्क्तादिम् तस्मिन् । यथा घ्यणि जन्यं बध्यं घञि जनः बधः णकि जनकः इणि अजनि अबधि । सेमोऽमन्तस्य तु । घञादौ श्रमः श्रमकः अश्रमि । सेमः किं गामुकः अगामि । कामादेस्तु कामः वामः आचामः । आचमः किं चमः विचमः । अनादेस्तु अमः आमः यमः यामः विश्रमः विश्रामः विश्रमग्रहणात् श्रमः प्रश्रम इत्यादिषु नित्यम् । अजनीति पदस्तनीण् घे इति इण् । पक्षे ध्यां सिः अजनिष्ट जज्ञे इति हनगमेत्युङ् लोपः । अदीपीति पदस्तनीण् घे इतीण् वा प्रणिपादीति गदनदपतपदेति णत्वम् । ननु अबुद्धेत्यादौ सेर्लोपे त्यलक्षणमिति न्यायात् झभान्तस्येत्यादिना वकारस्य भकारः, कथं न स्यादिति चेत् सत्यं त्यलोपे सति त्यस्वरूपेण विहितं कार्यं तदेव स्यात् न तु प्रत्ययस्य वर्णविहितम् इति । अनात्सीदिति अनिमत्वात् वृद्धिः अनद इति नद्दो घङ् भौ इति घङ् ॥ ७४४ ॥

इति दिवादिपादः ॥

---

अभिषुणोति इति णीक इति पक्षे ष्‌ ु णुं इति णत्वम् । सुन्वन्ति सुध्वीरिति व ।

अषावीदिति सस्तुधोरितीम् अषावीति ...

[ २४२ ] चि ञ न चित्याम् ।

## ७४६ । चेः किर्वा सन् ठ्योः ।

चेः ६।, किः १।, वा ।१।, सन्-ठ्योः ७॥ ।

चिकाय चिचाय । चिक्ये चिच्ये । [२४३] स्तृ ञ न स्तृतौ ।

## ७४७ । स्वाद्यृ-ॠ-वृ-रस्कु र्वेम् सन्मढीसेः ।

स्वादि-ऋत्-ॠत्-वुः ५।, अस्कुः ५।, वा ।१।, इम् ।१।, सन् मढीसेः ६। ।

स्कुवर्ज-स्वाद्यृदन्तात् ॠदन्ताच्च वृञो वृङश्च सनो मे स्थितयो-ढींस्योश्च इम् स्यात् वा । अस्तरिष्ट अस्तृत । स्तरिषीष्ट स्तृषीष्ट । [२४४] वृञ न वृतौ । अवारीत् । अवरीष्ट अवरिष्ट अवृत । ववरिथ ववृव । वरिषीष्ट वृषीष्ट । [२४५] धु ञ न कम्पे । [६२३] सुस्तुधोरितीम् । अधावीत् [२४६] हि न वर्द्धने गतौ । प्रहिणोति ।

---

सुधुविव इति ऊदुसुनीत्व्या इति इम्निषेधात् नेमसुभिति नियमेन नित्यमिम् क्तिवादिति षत्वे शु ध्वोरित्युव् ॥ ७४५ ॥

डुमिञ् न क्षेपे मीङ्यतु मीञग् बधे मी कि गत्या विशेषानभिधानात् । एषा मपि गुणसाधनयोग्यप्रत्यये च ङा स्यात् । न तु खलि अलि च । लियस्तु यपि गुणसाधनयोग्ये च ङा स्याद्वा । यथा प्रमाय माता मान मास्यति मापयति । खललीत् दुर्मयः मयः लियस्तु प्रलाय प्रलीय लाता लेता इत्यादि ॥ ७३५ ॥

चेः किर्वा स्यात् सनि ठ्याउ । चिकाय चिचाय चिकीषति चिचीषति ॥ ७४६ ॥

स्य आदिर्यस्य स स्यादिः स्वादिश्चासावृच्चेति स्वाद्यृत् स्वाद्यृच्च ॠच्च वृश्चेति स्वाद्यृदृवृ तस्मात् । नास्ति स्कुर्यत्र सोऽस्कुः तस्मात् । ढी च सिश्चेति ढीसिः मे ढीसिः मढीसिः । सन् च मढीसिश्चेति तस्य सर्वत्र पुंस्त्वं सूत्रत्वात् । यथा तिस्तरिषति तिस्तीर्षति स्तरिषीष्ट स्तृषीष्ट अस्तरिष्ट अस्तृत । इगुङुरिति कित्वान्न गुणः । तितरिषति तितीर्षति तरिषीष्ट तृषीष्ट अतरिष्ट अतीर्ष्ट । विवरिषति वुवूर्षति विवरिषते वुवूर्षते वरिषीष्ट वृषीष्ट अवरिष्ट अवृत । अस्कुः किं सञ्चिकीर्षति संस्कृषीष्ट समस्कृत । अवारीदिति नेमिकाजा इत्यत्र इकर्जनात् इम् ॥

## ७४८। ह्वेः खेरनङि घिः ।

ह्वेः ६।, खेः ५।, अनङि ७।, घिः १।।

खेः परस्य ह्वेर्घिः स्यात् न तु अङि । जिघाय ।

[ २४७ ] क्रवि न क्रतौ हिंसे ।

## ७४९ । क्रविधिव्योः क्रधी श्नौ ।

क्रवि-धिव्योः ६॥, क्र-धीः १॥, श्नौ ७।।

क्रणोति अक्रवीत् [ ५६८ ] अतएवेंदितो नुण् । चक्रव ।

क्रविता क्रव्यात् । [२४८] दन्भु न दम्भे । देभतुः ददम्भतुः ।

## ७५० । श्रन्थ-ग्रन्थ-दन्भां थपि न-लोपो वा ।

श्रन्थ-ग्रन्थ-दन्भां ६॥, थपि ७।, नलोपः १।, वा ।१।।

देभिथ ददम्भिथ । [२४९] धिवि न प्रीतौ । धिनोति । [२५०] अमू

ङ न व्याप्ति-संहत्योः । [५८०] स्वान्तादिति खेरान् । आनशे ।

इति स्वादिपादः ।

---

इम् । वक्वेति नेमसुम इति नित्य इमो निषेधः । अधात्रीदिति सुस्तुधोरिति इम् । प्रह्विणोति इति मीनाह्निन्वानिति णत्वम् ॥ ७४७ ॥

जिघाय जिघीषति जेघीयते । अङि तु अजीह्वयत् ॥ ७४८ ॥

क्रविधिव्योर्विभक्त्युत्पत्तेः पूर्वम् इदनुबन्धत्वात् नुणि कृते तस्यापि धात्ववयवत्वात् श्नौ परे तत्सहितयोरादेशः । क्रणोति इति षृ ऋ इति णत्वम् । अक्रवीदित्यादौ वकारस्य दन्त्यत्वेन झसत्वाभावात् तस्मिन् मोनुंरित्यनेनानुस्वारो न स्यात् षृ ऋ इति णत्वम् । देभतुरिति स्यात् ठ्यपिदिति कित्वपक्षे नलोपे दभभागत्वाभात् खि-लोपादि ॥ ७४९ ॥

एभ्यस्थप् किल् वेति कृतेऽभीष्टसिद्धौ थपि नलोप इति गौरवम् कथमिति चेन्न दम्भिकनोदे इति इदनुबन्धचुरादेर्ञेरनित्यपक्षे देभिथ इत्यत्र थपः किद्वेति पक्षे इदि धातोर्नलोपनिषेधात् इमुङ्न इत्यस्याप्राप्तौ चुरादेर्ञेरनित्यत्वबीजं चुर्थो ञिरित्यत्र द्रष्टव्यम् स्पष्टार्थम् । श्रेथिथ शश्रन्थिथ ग्रेथिथ जग्रन्थिथ देभिथ ददम्भिथ ॥ ७५० ॥

## चतुर्थः पादः—तुदादिः ।

[२५१] तुदी ञ श व्यथे । तुदति तुदते ।

[२५२] भ्रस्जो ञ श पाके । भृज्जति अभ्राक्षीत् ।

### ७५१ । भ्रस्जोऽरे णौ भर्ज वा ।

भ्रस्जः ६।, अरे ७।, णौ ७।, भर्ज ।१।, वा ।१।।

बभर्ज बभ्रज्ज बभर्ज्ज बभ्रज्जे ।

[२५३] मुच ली ञ श प मोक्षे ।

[७४१] नुण् रध इति नुण् । मुञ्चति । अमुचत्, अमुक्त ।

[२५४] ञि लिपी ञ श प लेपने ।

अलिपत् । अलिपत अलिप्त । [२५५] षिची ञ श प उक्षणे ।

निषिञ्चति । न्यषिचत्, न्यषिचत न्यषिक्त । निषिषेच ।

[२५६] कृती शप छिदि ।

[७२८] नृत्कृदितोम् वा, कर्त्तिष्यति कर्त्स्यति ।

[२५७] षू श क्षेपे । विसुवति व्यषावीत् ।

[२५८] व्रस्चू श च्छेदे ।

वृश्चति । अव्रश्चीत् अव्राक्षीत् । वव्रश्च वव्रश्चतुः ।

---

तुदतीत्यादि शप्रत्ययस्य ङित्वात् न गुणः । भृज्जतीति ग्रहस्वपाद्योरिति जि: अभ्राक्षीदिति स्यादिः सलोपे शक्त्राजिति षङि षढोः कः सि अनिमत्वाद्वृद्धिः ॥७५०॥

भ्रस्जो भर्ज वा स्यात् अरे गुणसाधनयोग्ये । भ्रस्जधातोः परेऽप्रत्यये जाते गुणिनो रस्यासम्भवात् एव णौ इत्युक्तेऽपि अरप्राप्तौ अरे इत्युक्तं ज्ञापयति क्वचित् अरे गुणिन्यपि भर्जादेशो न स्यादिति तेन क्याम् अभ्राक्षीदित्यादिकमेव। बभर्ज इति ठ्या एकारस्य स्यात् ठ्यपित् किद्वेति किन्त्वाभावपक्षे गुणसाधनयोग्यत्वे सति भर्जादेशः पक्षे बभ्रज्जे कित्त्वेऽपि ठ्यां नवेप्रच्छाम्भिति जेर्निषेधः । मुञ्चतीति मुचादित्वात् नुम् । अमुचदिति लृदित्वात् ङः । अमुक्तेति आत्मनेपदे ङस्या-

[ २५९ ] ऋच्छश गमनमोहकाठिन्येषु।

## ७५२। ऋच्छो गुष्ठ्याम्।

ऋच्छः ६।, गुः १।, ठ्याम् ७।

आनर्च्छ। [ २६० ] कॄश विक्षेपे। [ ६२८ ] ॠदिरणाविति इर्। किरति। चकरतुः। करीता करिता।

## ७५३। प्रत्युपोपात्कः सुम् हिंसाच्छेदे।

प्रति-उप-उपात् ५।, कः ६।, सुम् ।१।, हिंसा-च्छेदे ७।

प्रत्युपाद्धिंसायाम् उपाच्छेदे किरतेः सुम् स्यात्। प्रतिस्किरति उपस्किरति।

---

अलिपदिति वक्ष्यस्येति ङः। अलिपत अलिप्तेति लिब्भ्यस्तु मे इति वा ङः। निषिञ्चति इति मुचादित्वात् नुण् गीकः इति षत्वम्। न्यषिञ्चतेति लिब्भ्यस्तु मे इति ङो वा निषिषिच' दशस्थादेरिति षत्वम्। विषुवति इति गीक इति षत्वं श धोरित्युथ्। व्यषावीदिति वेसूदित्वत सूतिसूयग्रहणात् अस्मान्नित्यमिम्। व्रश्यतीति ग्रहस्वपाद्योरिति जिः। अव्राचीदिति इमोऽभावपक्षे शक्राजेति षङि निमित्तापाये नैमित्तकस्याप्यपाय इति न्यायात् चकारनिमित्तकस्य शस्य पुनर्दन्त्यत्वे स्यादेः सौलोपः षढोः कः सी इति के क्षित्वादिति षत्वे अनिमत्वात् वृद्धिः। वव्रश्चतुरिति व्यां नवेप्रच्छाम् इति जेर्निषेधः॥ ७५१॥

ऋच्छो गः स्यात् ठ्याम्। सर्वत्र णपादौ बलवत्त्वादादौ कोऽच इति द्विर्भावे लघूङोऽभावात् अतुसादेश्च किञ्चादप्राप्तौ ठीमात्रविधिरयम्। न च प्रकृतेः पूर्वं पूर्वं स्यात् अन्तरङ्गतरं तथा इति न्यायात् गुणस्यैव बलवत्त्वमिति वाच्यम्। विच्छायति इत्यत्र गुणादपि विशिष्टत्वेन द्विर्भावस्य बलवत्त्वदर्शनात्। आनर्च्छ आनर्च्छतुः आनर्च्छुरित्यादि। चकरतुरिति ऋतो गः कित् ठ्याम् इति गुणः। करीतेति वृतीवेमोर्घोऽठीति वा दीर्घः॥ ७५२॥

प्रतिश्च उपश्च प्रत्युपं प्रत्युपञ्च उपश्च प्रत्युपोपं तस्मात्। हिंसा च छेदश्च हिंसाच्छेदं तस्मिन्। प्रतिस्किरति हिनस्तीत्यर्थः। परि नि वि सेवसुमिति उक्तेन

[२६१] तृन्प श प्रीणने ।

## ७५४ । तृन्पां न-लुक् वा श-णौ ।

तृन्पां ६॥, न ।१।, लुक् ।१।, वा ।१।, श-णौ ७। ।

तृन्प तुन्प तृन्फ तुन्फ रिन्फ गुन्फ दृन्भ उन्भ शुन्भां नकारस्य लुक् वा स्यात् शे णौ च । तृपति तृम्पति

[२६२] चृती श प हिंसे । चर्त्तिष्यति चर्त्स्यति । [२६३] प्रच्छी श ज्ञीप्से । पृच्छति । अप्राक्षीत् । पप्रच्छ पप्रच्छतुः ।

[२६४] सृजी श विसर्गे ।

अस्राक्षीत् । ससर्जिथ सस्रष्ठ । [२६५] टु मस्जी श स्नाने । मज्जति अमाङ्क्षीत् । [२६६] स्पृशी श स्पृशि ।

अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् । [२६७] विच्छ श गतौ । विच्छायति विच्छति । अविच्छायीत् अविच्छीत् ।

[२६८] मृशी श मृशि । अम्राक्षीत् अमार्क्षीत् अमृक्षत् ।

[२६९] इषु श वाञ्छे ।

इच्छति [६०६] वेमसहेतीम् वा, एषिता एष्टा ।

---

बहुवचनं गणार्थं गणस्य । तृन्पतिस्तृन्फतिश्चैव तुन्फतिस्तुम्फतिस्तथा । गुम्फतिर्दृन्फतिश्चैव रिन्फतिः शुन्भतिस्तथा । उन्भतिश्चैव विज्ञेयस्तृन्पादिर्नवभिर्गणः ।। एषां नस्य लुक् स्याद्वा शप्रत्यये परे गुणसाधनयोग्यप्रत्यये परे च इत्यर्थः । शे यथा तृपति तृम्पति तृफति तृम्फति तुपति तुम्पति तुफति तुम्फति गुफति गुम्फति दृफति दृम्फति रिफति रिम्फति शुभति शुम्भति उभति उम्भति । णौ यथा तर्पयति तृम्पयति तर्फयति तृम्फयति तोपयति तुम्पयति गोफयति गुम्फयति दर्फयति दृम्फयति रेफयति रिम्फयति शोभयति शुम्भयति ओभयति उम्भयति ।। गवि कर्त्तरि प्रात्तुन्पतेः सुम्वक्तव्यः । प्रस्तुम्पति गौः । अन्यत्र प्रतुम्पति अश्वः । पृच्छतीति ग्रहस्वपाद्योरिति जिः । अप्राक्षीदिति प्रच्छाजेति षङि षढोः कः सि वे अनिमत्वात् वृद्धिः । पप्रच्छतुरिति व्यां नवेप्रच्छाम इति जेर्निषेधः । अस्राक्षी-

[ २७० ] कुट शि कौटिल्ये।

## ७५५। कुटां णञी ञ्णिति।

कुटां ६॥, णञी १॥, ञ्णिति ७।।

कुटादेर्णञी न स्यात् ञिति णिति च, नान्यत्र। अकुटीत् चुकोट। [ २७१ ] व्यच शि व्याजे।

विचति। विव्याच, विविचतुः।

---

अमाङ्क्षीदिति नुर्णां रध इति नुण् स्यादेः सोलोपः चुङ्ङिति कुङि नस्यानुस्वारे अपि ञमौः। अम्राचीदित्यादि क्षषन्नषस्पृशेति सिर्वा वद्रोऽकिदिति न्नद्रो वा सेरप्राप्तौ सक्। विच्छायतीत्यादि विछास्तुतिपण इति वायः। आयान्तत्वात् सनञ्यादिर्धुः पुनर्धातुसंज्ञायां तिप्शपौ आयस्याप्राप्तिपक्षे श एव। तेन विछायन्ती कुले स्त्री वा इत्यत्र अपयन इति नुण्। विच्छती विच्छन्ती कुले स्त्री वेत्यत्र आदीपोरिति नुण् वा। अम्राक्षीदित्यादि पूर्ववत् इच्छतीति स्यादानेति इच्छादेशः॥ ७५४॥

ञ च ण च ञणौ ञणावितौ यस्य स ञ्णित् तस्मिन्। ञित्णितोः परयोः गुणवृद्धी: सिद्धौ पुनर्विधानं नियमार्थम्। तेन कुटादीनां ञित्णिद्भ्याम् अन्यत्र गुणवृद्धी न स्तः इति नियमः। ञित्णितोस्तु गुणसामग्र्यां गुणः वृद्धिसामग्र्यां वृद्धिः स्यादित्यर्थः। यथा कुट शि कौटिल्ये इत्यादीनां अकुटीत् कुटिष्यति कुटनमित्यादौ न गुणः।नू शि स्तवने इत्यादीनाम् अनुवीदित्यादौ न वृद्धिर्न च गुणः। अगुणत्वादुव् च। एवं नुविष्यति नुवनमित्यादौ च बोध्यम्। ञित्णितोस्तु कोटयति चुकोट इत्यादौ गुण एव। नावयति नुनाव इत्यादौ वृद्धिरेव। कुटादिश्च कुटि घुटि चुटि तुटि पुटति च्छुटयस्तुटि मुटि लुठि कुड़ति गुड़यः घुड़ि गुड़ि तुड़ि थुड़ि भुड़ति द्रुड़यः स्फुड़ि बुड़ि लुड़ति स्थुड़ति स्फुड़यः। व्यचशि व्याजे कुचि गुजि ऊड़यः चुलि गुरति च्छुरति पुड़ि मुड़यः। स्फुरति स्फुलती क्षड़ क्षड़ि रुफयः। कूगूनूदीर्घाः सकलाः कुवतिर्गुवतिर्धुवतिश्चैते ङसान्ता इति धीरो ब्रूते। द्वाचत्वारिंशत्संख्याता धातव एव कुटादावुदिताः। लिखतिर्मिलतिश्चेविह कश्चित् व्यस्यातामिति वदति विपश्चित्। तेन लिखितुं विश्वसृजोऽपि शक्तिहानिरित्यादि एवं लिखनं लेखनं लिखितव्यं लेखितव्यम् इत्यादयः प्रयोगाः।

## ७५६। व्यचो जिरञ्णिदसि।

व्यचः ६।, जिः १।, अञ्णिदसि ७।

विचिता। [ २७२ ] त्रुट शि च्छेदे। त्रुट्यति त्रुटति। [ २७३ ] स्फुर शि स्फूर्त्तौ। निष्फुरति निस्फुरति। एवं [ २७४ ] स्फुल शि स्फूर्त्ति-चलनयोः। [ २७५ ] नू शि स्तवने। अनुवीत्। नुनाव। [ २७६ ] मृ ङ श मृतौ।

## ७५७। मृङष्टीढ्ये मम्।

मृङः ५।, टीढ्ये ७, मम् १।

द्यां द्यामल्ये च मृङो मं स्यात्। [६२०] ऋद्रिः शयक् ढीपि। म्रियते, अमृत, मृषीष्ट। एषु किम्। ममार, मरिष्यति।

---

व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीर इति जयदेवः। विचतीति ग्रहस्वपाद्योरिति जिः विविचतुरिति व्यथग्रहेति खिर्जिः ग्रहस्वपाद्योरिति मूलस्य जिः ॥ ७५५ ॥

ञ च ण च ञणौ ञणावितौ यस्य स ञिणत्। ञिणच्च अस् च ञिणदस् तस्मिन्। व्यचो जिः स्यात् न तु ञिति णिति असि च। विचिता विचिष्यति विच्यते विव्याच विविचतुः। ञिणदसि तु व्याचयति व्याचकः उरुव्यचाः त्रुट्यतीति क्रमक्लमेति श्यन् वा। निष्फुरति विष्कभ्नेति षत्वं वा। अनुवीदिति कुटादित्वात् गुणवृद्ध्योर्निषेधे भ्रनुध्वोरियुव् ॥ ७५६ ॥

टी च ढी च अञ्च टीढ्यं तस्मिन् विषयसप्तमीयम्। मृङो ङित्त्वेऽपि द्यां द्याम् अल्ये च विषये मं स्यादिति नियमः। म्रियते म्रियेत अमृत मृषीष्ट अन्यत्र ममार मर्त्ता मरिष्यति अमरिष्यत् केचित्तु मृङो ङानुबन्धाभावेऽपि टीढ्ये मविधाना-दन्यत्र परस्मैपदे सिद्धे ङित्करणादात्मनेपदस्य प्राप्तौ परस्मैपदं कुत्रचिद्भवति। आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचिदिति न्यायो लभ्यते तेन स एवायं नागः सहति कालभेभ्यः परिभवमिति। विद्या धनं मनुष्याणां मृतेऽप्यनगाच्छते क्वापि

[ २७७ ] ओ विजी ङ प्र भी-कम्पे।

७५८। विजेर्णुर्नेमि।

विजे: ६।, णु: १।, न।१।, इमि ७।।

विजेर्णु: न स्यात् इमि। अविजिष्ट।

इति तुदादिपाद:।

इति प्रथम चतुर्गणाध्याय:।

---

अथ द्वितीय चतुर्गणाध्याय:।

## प्रथम: पाद:—रुधादि:।

[ २७८ ] रुधिरी ध ञि आवरणे। रुणद्धि।

७५९। नणो न्र्ऽणौ।

नण: ६।, न्।१।, रे ७।, अणौ ७।।

नणो नकार: स्यात् अणौ रे। रुन्ध: रुन्धन्ति। अरुणत्, अरुण: अरुणत्। अरुधत् अरौत्सीत्। [२७९] छृ दु ञ धिर् देवने। [७३९] छर्दिष्यति छर्त्स्यति। एवं [२८०] तृदु ञ धिर्नादरे।

---

इति प्रथम चतुर्गणाध्याय:।

विजि: किदिमित्यनेनैवेष्टसिद्धौ णुर्नेमीति गौरवं स्पष्टार्थम्। अविजिष्ट विजिष्यते विजिता ॥ ७५८ ॥

इति तुदादिपाद:।

---

रुणद्धीति रुध तिप् नण् ढभात्तथोरिति तस्य धे भप्भसोरिति धस्य द: षृ र्णे इति णत्वम्

अरे नणोऽसम्भवात् रे इति स्पष्टार्थम्। रुन्ध इत्यादौ दकारस्य वा लोप:। इति पूर्वमुक्तं नयाणामेकवर्ग्याणां मध्यमस्य लुप्यते इति प्रमाणात्। णत्वाभावबीजन्तु षृ र्णे इत्यत्र लिखितम्। अरुणदित्यादि हसाद्ग्रामिति सेर्लोपे भप्भसोरिति धस्य तौ दौ वा। पक्षे ध्यां सौ रवादधोरिति धस्य रेफे रेफस्य विसर्ग:। उभयत्र षृ र्णे इति णत्वम्। अरुधदित्यादि इरित्वात् ङो वा। पक्षे ध्यां सौ औदित्वान्नेम् अनिमत्वात् वृद्धि:। छर्दिष्यतीति वृतृञ्चदितीम् वा ॥ ७५९ ॥

[२८१] तृ ह्रु ध हिंसे।

## ७६०। तृहः इण् पिद्धसे।

तृहः ६।, इण् ।१।, पित्-हस्-रे ७।।

तृहो नण इण् स्यात् पिति हसे रे। तृणेढ़ि तृण्ढः तृंहन्ति। अतर्हीत् अतृक्षत्।

[२८२] हिसि ध कि हिंसे।

## ७६१। नणो न लोप्यः।

नणः ५।, न ।१।, लोप्यः १।।

हिनस्ति [२८३] अन्जूध जि व्यक्ति गति-म्रक्षणे। अनक्ति।

## ७६२। अञ्जः सेरिम्पे।

अन्जः ५।, सेः ६।, इम् ।१।, पे ७।।

अन्जः परस्य सेः इम् स्यात् पे। आञ्जीत् आनञ्ज।

[२८४] जि इन्धी ङ ध दीप्तौ। इन्धाञ्चक्रे।

इति रुधादिपादः।

---

पिच्चासौ हस् चासौ रश्चेति पिद्धसः तस्मिन्। अनाप्यरे नणोऽसम्भवात् रे इति स्पष्टार्थम्। तृणेढ़ीति तृह हिंसे तिप् नण् अनेन नणोऽन्त्याचः पर इण् तृणेह्ति इति स्थिते ह्नौ ढ़ौ भौ ढभात्तथोः ष्टुभिरिति ढ्रोढ्रीति। तृण्ढ इति नणोर्न्ऽणौ इति नकारे ष्टुभिरिति णत्वम्। अतर्हीदिति नित्यमिम्। अस्योदित्त्वं तुदादिपक्ष एव न रुधादिपक्षे अतएव कातन्त्रगणे रुधादौ तृहहिसि हिंसायां इति तुदादौ तु तृ ह्रु ङ् तृह तृनह्न हिंसार्थां इति। कविकल्पद्रुमे तृहधू तृणह्र ध्र हिंसे इति रुधादिपक्षेऽप्यूदनुबन्धः केषाञ्चिदनुरोधात्॥ ७६०॥

नणो नः परो नकारो लोप्यः स्यात्। हिसि ध कि हिंसे हिनस्ति एवं भञ्जधौ भनक्ति उन्दधौ उनत्ति अञ्जूधजि अनक्ति॥ ७६१॥

ऊदित्त्वादेमत्वे नित्यार्थं विधानम् आञ्जीत् सेः अन्यत्र अञ्जिष्यति अङ्क्ष्यति अञ्जिता अङ्क्ता आनञ्जेति स्यान्तादादीति वेदाम्। इन्धीञिधङ इन्धे इन्धाञ्चक्रे इति विंजादीत्याम्॥ ७६२॥

[ २८५ ] तनु ञ द विस्तृतौ।

तनोति तनुतः तन्वन्ति, तन्वः तनुवः तन्मः तनुमः।

## ७६३। सेर्लुक् त-थासो स्तन्भ्योऽकृर्वा।

सेः ६।, लुक् ।१।, त-थासोः ७॥, तन्भ्यः ५॥, अकृः ५।, वा ।१।।

कृवर्जात् तनादेः सेर्लुक् स्यात् वा त-थासोः परयोः। अतत अतनिष्ट, अतथाः अतनिष्ठाः। [ २८६ ] षनु ञ द दाने।

सनोति। असात असनिष्ट, असाथाः असनिष्ठाः। सायात् सन्यात्।

[ २८७ ] क्षणु ञ द वधे। अक्षणीत्।

[ २८८ ] क्षिणु ञ द हिंसायाम्।

## ७६४। नोप्युङो णुर्वात्वृतः।

न ।१।, उपि ७।, उङः ६।, णुः १।, वा ।१।, तु ।१।, ऋतः ६।।

क्षिणोति। [ २८९ ] ऋणु ञ द गतौ। ऋणोति अर्णोति।

[ २९० ] डु कृ ञ द करणे। करोति।

---

तनोति इति तन्भ्यः श्रुप्रेध्रे इति श्रुप् तन्व इत्यादौ नुपीऽस्यस्येति उकारलोपो वा।

तश्च थास् च तथासौ तयोः। थास् साहचर्य्यात् तकार आत्मनेपदस्यैव ग्राह्यः। अन्यथा तकारमात्रप्राप्तौ परस्मैपदस्य तां तं त एषु अतानिष्टाम् अतानिष्टम् अतानिष्ट एष्वपि प्रसक्तेः। किञ्च तथोरित्युक्तावपि थकारसाहचर्य्यात् आत्मनेपदीयतकारस्यैव प्राप्तौ थास् ग्रहणं स्पष्टार्थम्। अतत इत्यादि सेर्लुकि वन्नतनाद्यनिमां ञम् लोपः। लुक् करणात् त्यलोपे त्यलक्षणमिति न्यायात् गुणि सौ परे विहितस्य कार्य्यस्य निषेधेऽगुणिनोस्तथासोः परयोः ञम्लोपः। अकृः किम्। अकृत अकृथाः उभयत्र इगुङुर्मंढोसेः किच्चात् गुणाभावे ह्रस्वात्दिति सेर्लोपः। असातेत्यादि सेर्लुकि खनसनजनामिति ङा। पृचि सेरिम्। अक्षणीदिति हसादेः सेम इत्यत्र क्षणवर्जनात् न त्रिः॥ ७६३॥

## ७६५। कुरुञ्लोपो म्वि।

कुः ५।, उञ्-लोपः १।, म्वि ७।।

**कुर्वः कुर्मः, कुर्य्यात्। चकृव।**

## ७६६। सम्परेः सुमुपात्तु भूषा-सङ्घ-प्रतियत्नविकृताध्याहारे।

सम्-परेः ५।, सुम् ।१।, उपात् ५।, तु ।१।, भूषा-सङ्घ-प्रतियत्न-विकृताध्याहारे ७।।

**आभ्यां कृञः सुम् स्यात् उपात्तु भूषादावर्थे। संस्करोति, समस्कृषाताम्, सञ्चस्करिथ, सञ्चस्करिव, संस्क्रियात् संस्कृषीष्ट। परिष्करोति पर्य्यष्कार्षीत् पर्य्यस्कार्षीत् उपस्करोति।**

---

उपि परे उङो णर्न स्यात् उङ ऋकारस्य तु वा। यथा चिण दु ञ वधे चिणोति ऋतन्तु ऋणदु ञ गतौ ऋणोति अर्णोति घृणदु ञ दीप्तौ घृणोति घर्णोति तृण दुञ भचे तृणोति तर्णोति। उङः किं करोति ॥ ७६४ ॥

म च व च य च म्वि तस्मिन्। कृञः परस्य उपो लोपः स्यात् मि वे ये च। कुर्व इत्यादि वमयेषु उपो लोपः। व्यंनच्तयोक इत्यत्र कुर्वर्जनात् न दीर्घः। करोमीत्यत्र स्वरादेशस्य बलवत्त्वात् गुण एव। चकृवेति नेमसृर्मिति निषेधात् नेम् ॥ ७६५ ॥

सम् परिभ्यां कृञः सुम् स्यात्। अर्थानभिधानेऽपि भूषण एव कातन्त्रसंचिप्तसारैकवाक्यत्वात्। भूषणादन्यत्र संकरोति परिकरोति। उपात् तु भूषणादौ भूषणमलङ्करणं सङ्घः समूहः। प्रतियत्नो गुणान्तराधानं विकृतं स्वरूपस्यान्यथात्वम् अध्याहारो वाक्यस्य अश्रुताकाङ्क्षितशब्दोपादानम्। समस्कृषाताम् इति स्यादृद्दुरित्यत्र स्कवर्जनान्न वेम्। इगुङुर्मढीति सेः कित्त्वान्न गुणः। सञ्चस्करिथेति नेमृतस्थप इत्यत्र स्कवर्जनादिम्। संस्क्रियादिति स्यादृत्त्रौत इत्यत्र स्कुस्तत्यामेवेति उक्ते गुणनिषेधः ऋद्रिः श यक्ढोपे इति रिः। संस्कृषीष्टेति इगुङुर्मढीति सेः कित्त्वात् न गुणः। परिष्करोति इति परिनिविसेवेति षत्वम्। पर्य्यष्कार्षीदित्यादि निविपरिस्वनजीति वा षत्वम् ॥ ७६६ ॥

**७६७। हस्ते पाणौ प्राध्वं जीविकोपनिषदौ व्यस्य कृञि स-स्तिरो मध्ये पदे निवचने मनस्युरस्युपाजेऽन्वाजे साक्षादादेस्तु वा ।**

हस्ते-उपनिषदः ६।, व्यस्य ६।, कृञि ७।, सः १।, तिरस्—साक्षादादेः ६। तु ।१।, वा ।१। ।

**हस्ते करोति, तिरस्करोति करोति-तिरः ।**

इति तनादि पादः ।

---

## तृतीयः पादः—क्र्यादिः ।

---

[ २९१ ] डु क्री ञ ग द्रव्यविपर्य्यये ।

क्रीणाति । [ ७०१ ] श्राद्यगोरिति क्रीणन्ति ।

[ २९२ ] स्कु ञ ग न उद्धृतौ ।

---

हस्ते इत्यादेरुपनिषदन्तस्याऽव्ययस्य कृञधातौ परदे नित्यं समासः स्यात् तिरःप्रभृतेस्तु वा । समासोऽप्येकपदीभावमात्रम् । न तु द्वन्द्वादेरेकतमः । समासकरणञ्च पूर्वनिपातनियमार्थं क्त्वो यवर्थञ्च । हस्ते पाणौ स्वीकारे । हस्तेकृत्य स्वीकृत्य इत्यर्थः । तां हस्तेकृत्यमाश्वसीरिति भट्टिः । प्राध्वं बन्धनानुकूल्ये प्राध्वंकृत्य । जीविकोपनिषदौ उपमायाम् । जीविकाकृत्य जीविकामिव कृत्वा इत्यर्थः । तिरोऽन्तर्द्धाने तिरस्कृत्य । उरसि मनसि मध्ये पदे निवचने इति पञ्चानुपश्लेषे । उरसिकृत्य उरसिकृत्वा । अनुपश्लेष इति किम् । उरसिकृत्वा हस्तं शेते पदे कृत्वा शिरः शेते श्वा । उपाजे अन्वाजे दुर्बलस्य बलाधानार्थे साक्षादादेरभूततद्भावे । साक्षात्कृत्वा साक्षात्कृत्य । साक्षादादिस्तु साक्षात् मिथ्या आस्था श्रद्धा अलङ्का प्रभाऽचला चिन्ता प्रमा प्रजा विन्ना रुजा स्पृहा संशय्या नमस् आविस् प्रादुस् बहिस् इत्यष्टादश । अग्नौ वशे विकल्पने विहसने प्रपतनेऽर्थे इत्यादीनामपि वा समासमिच्छन्ति जौमराः । वशेकृत्य दशग्रीवं मोदस्व वरमन्दिरे इति भट्टिः ॥ ७६७ ॥

## ७६८ । स्कु स्कन्भु स्कुन्भु स्तन्भु स्तुन्भुभ्यः श्नुश्नौ घे रे ।

स्कु—स्तन्भुभ्यः ५॥, श्नु-श्ना १॥, घे ७।, रे ७। ।

एभ्यो घेऽर्थे श्नुः श्ना च स्यात् रे परे। स्कुनोति स्कुनाति, विस्कभ्नोति [ ६२५ ] विस्कभ्नोति षः विष्कभ्नाति । एवं विस्कुभ्नाति विस्कुभ्नोति, विष्टभ्नाति विष्टभ्नोति, व्यष्टभत् व्यष्टम्भीत्, वितष्टम्भ । स्तुभ्नोति स्तुभ्नाति । [ २९३ ] मी ञ ग वधे ।

[ ७४५ ] मिम्योरिति ङा, अमासीत् अमास्त ।

[ २९४ ] पू ञ गि शोधने ।

## ७६९ । प्वादेः स्वो ने व्र्यादेस्तु वा ।

पू-आदेः ६।, स्वः १।, ने ७।, व्री-आदेः ६।, तु ।१।, वा ।१। ।

प्वादीनां स्वः स्यात् ना-त्ये परे व्र्यादेस्तु वा । पुनाति ।

[ २९५ ] कॄ ञ गि हिंसे ।

अकरीष्ट अकरिष्ट अकीर्ष्ट । करिषीष्ट कीर्षीष्ट ।

[२९६] धू ञ गि कम्पे । धुनाति । अधावीत् अधवीत् ।

[ २९७ ] ग्रह ञ ग आदाने । गृह्णाति ।

---

स्कु ञ आप्लुतौ स्तन्भु स्कन्भु स्कुन्भु ञ रोधने इति चत्वारः सौत्राः । यः पूर्वधातुपाठे न दृश्यते सूत्रे दृश्यते स सौत्रः । विस्कभ्नातीत्यादि विस्कभ्नानिवेति सूत्रे श्नाप्रत्ययस्य ग्रहणात् विस्कुभ्नोतीत्यत्र न षत्वम् । विष्टभ्नातीत्यादि उभयत्र गीक इति षत्वम् । व्यष्टभदित्यादि । श्नास्तविदृदुदिति ङीवा उभयत्रास्यपीति षत्वम् । वितष्टम्भेति दृशस्यादेरिति खिव्यवधाने षत्वम् । प्रमीणातीति णादिह्नमीनेति णत्वम् ॥ ७६८ ॥

ने श्नाप्रत्यये परे इत्यर्थः । प्वादिस्तु पूञगि शोधे लूञगि छेदे कॄञगि हिंसे, स्तॄञाच्छादे, धूञगि कम्पे, वृगिञ वरणे, भॄगि स्वृगि ख्यातौ हनने । मॄगितु धातुः कथितो त्वयां पृगितु रक्षे पूरणकृत्याम् । झॄगि ग्रीगितु विदितौ त्वयां दॄगि विदारे

## ७७०। हसान्नानो हौ।

हसात् ५।, ना ।१।, आन: १।, हौ ७।।

हसात् परो ना आनः स्यात् हौ परे। गृहाण। अग्रहीत्।
जग्राह जगृहतुः जग्रहिथ।

## ७७१। ग्रहेरिमो घोऽव्याम्।

ग्रहे: ५।, इम: ६।, घं: १।, अव्याम् ७।

ग्रहेः परस्य इमो घंः स्यात् न तु व्याम्। ग्रहीता।

[२९८] शॄ ञ गि हिंसे।

## ७७२। शॄ पॄ द्रां स्वो वा कित् व्याम्।

शॄ-पॄ-द्रां ६।।।, स्व: १।, वा ।१।, कित् व्याम् ७।।

एषां स्वः स्यात् किति व्यां वा। शश्रतुः शशरतुः।

---

नॄगितु नीत्यां भॄगितु भर्त्से जॄभ्दत्वे गॄगितु शब्दे ज्याजीर्णत्वे री रेषणगतयोॠ गि: गत्यां लीगि ल्वीगि श्लेषणकृत्यां व्रीगगि वरणे ल्वीगगि गत्यां भ्रीगगि धातुः कथितो त्र्यत्याम्। पञ्चाधिकविंशतिरिति गदिताः प्वादिगणे धातव इह विदिताः। इति। शेषास्त्रयो न प्वादय इति दुर्गसिंहः। प्वादय इति जैनेन्द्राः। उभयानुरोधात् त्रयाणां विकल्पः। ज्यागि जरायां इत्यस्य प्वादिफलन्तु जीनः जीनवानित्यत्र त्वादित्वात् तस्य नः। क्वचिन्नाप्रत्ययस्यापि ह्रस्व इति वररुचिः। स्मरणात् पुनते पापं धारणात् पूर्वसञ्चितम्। दर्शनात् लभते मोक्षमेतद्योगस्य लक्षणमिति प्रयोगः। अकरीष्टेत्यादि स्वाद्वृदॄदुरिति इम् पक्षे वॄतोवेम इति वा दीर्घः। इगु ङुरिति सेः कित्वे ऋकारस्य इरिर्व्यञ्जनच्त्रयोरिति दीर्घः। अधावीदित्यादि वेमूदिदितीम् वा॥ ७६९॥

ना आन इति चोभयं लुप्तप्रथमैकं सूत्रत्वात् सिलुक्। गृहाणेति ग्रहस्वपाद्योरिति जिः। आने कृते अकाराद्वेर्लोपः। एवं पुषाण मुषाण इत्यादि। हसात् किं जानीहि। अग्रहीदिति हान्तत्वात् न त्रिः। जगृहतुरिति ग्रहस्वपाद्योरिति जिः॥ ७७०॥

ग्रहीता ग्रहीतुम्। व्यान्तु जग्रहिथ जगृहिव॥ ७७१॥

एवं [ २९९-३०० ] ञि पॄ गि पालने, दॄ गि विदारे ।

[ ३०१ ] ज्या गि जरायाम् । जिनाति जिज्यौ ।

[ ३०२ ] व्री गि वृत्याम् । व्रिणाति व्रीणाति ।

[३०३] ज्ञा ग बोधे । जानाति । [३०४] श्रन्थ ग मोक्षे ।

श्रथ्नाति । श्रेथतुः शश्रन्थतुः, श्रेथिथ शश्रन्थिथ ।

एवं [ ३०५ ] ग्रन्थ ग गर्भे । [३०६] कुष ग निष्कोषे ।

[ ५७३ ] वेसुदितीम् वा, निरकोषीत् निरकुक्षत् ।

[ ३०७ ] अश ग भोजने । अशिता अष्टा ।

[ ३०८ ] वृङ् ञ ग वरणे ।

अवरीष्ट अवरिष्ट अवृत । ववृषे । वरिषीष्ट वृषीष्ट ।

इति क्र्यादिपादः ।

---

शॄगि हिंसने, ञिपॄगि पालने, दॄषगि विदारे एषां स्वः स्याद्वा किति व्याम् ।। शशरतुरिति ह्रस्वाभावपक्षे ऋतो णः कित् व्यामिति गुणः एवं पप्रतुः पपरतुः । दद्रतुः ददरतुः । व्रिणातीत्यादि व्र्यादेस्तु वेति वा ह्रस्वः । जानातीति स्यादानेति जादेशः । श्रथ्नातीति हसुङ्न इति न लोपः । श्रेथतुरिति स्यात् व्यपिदिति कित् पक्षे न लोपः खिल्लोपादिश्च । श्रेथिथेति श्रन्थग्रन्थदन्भामिति न लोपपक्षे खिल्लोपादिः । निरकुक्षदिति वेमत्वादनिम् पक्षे हशष इति सक् । अष्टेत्यादि वेमसहेतीम् वा । अवरीष्टेत्यादि स्यादृदृदुरिति इम् पक्षे वृतोवेम इति वा दीर्घः । अनिम् पक्षे इगुङूरिति सिः कित्त्वात् न गुणः । ववृषे इति नेमसुमिति नेम् । वरिषीष्ट इत्यादि स्यादृदृदुरिति वेम् इगुङुरिति कित्त्वात् न गुणः ॥ ७७२ ॥

इति क्र्यादिपादः ।

---

# चतुर्थः पादः—चुरादिः ।

---

[ ३०८ ] चुर कि स्तेये ।

## ७७२ । चुर्भ्यो ञि वा ।

चुर्भ्यः ५।।।, ञि १।, वा ।१।।

**चुरादे र्ञि स्यात् वा स्वार्थे । चोरयति चोरयते । अचूचुरत् । चोरयामास । चोर्य्यात् । पक्षे चोरति इत्यादि ।**

---

वाशब्दस्य व्यवस्थावाचित्वात् चुरादिभ्यो ञिर्नित्यश्चुराद्यन्तर्गणाद् युजादेर्ञिर्वा स्यादित्यर्थः । यत्तु चुरधातोरपि पक्षे चोरतीत्याद्युदाहरणं तच्चुरादेर्ञेः कदाचिदनित्यत्वज्ञापनार्थम् । एतदेव काव्यकामधेनौ अकिक् लक्षणीत्यत्र स्फुटीचकार वोपदेवः । यथा सिद्धे नित्यणिजन्तत्वान्नित्यनुम्त्वे कितामिदित् । निजमित्यत्वबोधार्थं न दृष्टोऽनुम् विधिः क्वचिदिति । अस्यार्थः—कितां कानुबन्धधातूनां नित्यणिजन्तत्वान्नित्यनुमत्वेऽगुणपरत्वाभावान्नलोपाभावे नित्यनकारवत्त्वे सिद्धे इदित् इदनुबन्धकरणं णिचो ञेरनित्यत्वबोधार्थम् । किन्तु अनुम् विधिर्नकाराभावः क्वचिदपि न दृष्ट इति । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायात् चुरादेः स्वार्थे ञिः । चुरादिभ्यो ञेर्ञित्त्वेऽपि उभयपदं न स्यात् अन्यथा स्यमञक् वितर्के इत्यादेर्ञानुबन्धो व्यर्थः स्यात् । तेन ङितश्चुरादेरात्मनेपदं ञितश्चुरादेरुभयपदम् उभयभिन्नचुरादेः परस्मैपदमिति । एवमेव धातुप्रदीपादयः । यत्तु चोरयति चोरयते इत्युभयपदोदाहरणं तद्धातुपारायणानुरोधार्थं कदाचित् प्रयुक्तस्यात्मनेपदस्य समाधानार्थञ्च यथा नालीकते यथेदानीं मामियं तेन तर्कये इति नैषधे । चोरयतीति चुर ञिः गुणः धातुसंज्ञायां तिप् शप् गुणः । अचूचुरदिति चोरिभागात् टीविभक्तेर्दौञिश्रीत्यङ् चोरीत्यस्य द्वित्वे रेर्लोपः भाभस्वर्येति खेरोकारस्य उकारे अग्ब्जुङः स्व इति मूलधातोरोकारस्य ह्रस्वे खेः सन्वदिति खेरुकारस्य दीर्घे ञेर्लोपः । चोरयामासेति विजादीत्याम् । चोर्य्यादिति क्यां ञेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् गुणः ॥ ७७२ ॥

[ ३१० ] कॄत क संशब्दे।

७७४। कीर्त्तः कॄतः।

कीर्त्त: १।, कॄत: ६।।

कॄतः कीर्त्तः स्यात् ञौ। कीर्त्तयति।

[ ३११ ] गणत् क संख्याने।

७७५। हसाल्लोपोऽशित्यद्‌योः।

हसात् ५।, लोप: १।, अशिति ७।, अत्-यो: ६॥।

हसात् परयोः अकार-यकारयोर्लोपः स्यादशिति। गणयति।

---

कॄत क संशब्दे इति धातुः कीर्त्तिः स्यात् सर्वत्र। कीर्त्तादेशस्य सार्वत्रिकत्वे कीर्त्तधातुपाठे नैवेष्टसिद्धौ कॄतधातुं पठित्वा कीर्त्तादेशविधानं ज्ञापयति क्वचित् कीर्त्तादेशो न स्यात् इति। तेन अचीकृतदिति। क्रमदीश्वरोऽप्येवम् ॥ ७७४ ॥

अत् च य च अद्‌यौ तयोः। अयोरिति लिपिकरप्रमादपाठः। अन्यथा इत् रहितेन अका सवर्णस्यावश्यग्राह्यत्वात् दासतीत्यादावाकारस्यापि लोपापत्तिः स्यात्। प्रकरणबलाद्धातुसंज्ञकस्यैव अकार-यकारयोर्लोपः तेन हसतीत्यादौ न स्यात्। हसात् किं? बोभूयिता अशिति किं? ईर्ष्यति। अरे इत्यनेनैवेष्टसिद्धौ अशितीति गौरवं कथमिति चेन्न मव्यबन्धे इत्यस्य यङ् लुकि ख्वा याति परे संमव्यात् इत्यत्र यकारलोपानुपपत्तेः। गणयतीति अकारलोपे लोपोऽप्यादेश उच्यते इति न्यायेन स्थानिवत्त्वात् न वृद्धिः। एवं कुणत्काभावमन्त्रयोरित्यादीनां कुणयतीत्यादौ न गुणः। अतएव अग्लोऽपित्वं स्थानिवत्त्वं चादन्तत्वप्रयोजनम्। यत्र त्वेते न विद्येते तत्राल्लोपविकल्पनम्। तद्बलादन्त्यदीर्घश्च पुक्चेत्यज्ञापयत्यत इति वोपदेवः। अस्यार्थः अग्लोपित्वं स्थानिवत्त्वञ्चेति उभयमदन्तत्वप्रयोजनम्। यथा अग्लोपित्वेन अजगवेषदित्यादौ न ह्रस्वः सन्वद्भावौ स्थानिवत्त्वान्न गुणवृद्धी कुणयति गणयतीत्यादि यत्र तु एते न विद्येते अग्लोपित्वस्थानिवत्त्वयोः प्रयोजनं न सम्भवतीति तत्र धातौ तद्बलात् अदन्तत्वस्वीकारबलात् अल्लोपविकल्पनम् अकारस्य स्थितिपक्षे दीर्घश्च पुक्च आदन्तत्वात् पण्च स्यादतोऽज्ञापयतीति सिद्धमिति केचित्। स्वमते तु अग्लोपित्वस्थानिवत्त्वयोः कार्य्यं येषु न स्यात् ते

## ७७६ । वेङ् गणकथ: खे ञ्राङि ।

वा ।१।, ईङ् ।१।, गण-कथ: ६।, खे: ६।, ञ्राङि ७।।

गणकथयो: खेरीङ् स्यात् वा ञ्राङि। अजीगणत् अजगणत् ।
[ ६३८ ] अग्लोपित्वात् न ङ: ।
[ २१२ ] कथत् क वाक्यप्रबन्धे अचीकथत् अचकथत् ।

इति चुरादिपाद: ।

इति द्वितीयचतुर्गणाध्याय: ।

---

धातवो हसन्ता एव मन्तव्या: । तेन अङ्कापयतीति प्रयोग: स्वमतविरुद्ध इति बोध्यम् । न च स्वमतविरुद्धानां कामधेनौ उपन्यासोऽपि विरुद्ध इति वाच्यम् । अष्टानां मतान्यालोक्य कर्त्तव्ये परमतोपन्यासेऽपि दोषाभावात् । अन्यथा केश्चिदमन्यमानस्य क्नञ्क्नताविति भौवादिकस्यापि पाठो विरुद्ध: स्यात् । किञ्च यदि तन्मतैकवाक्यता क्रियते तदा अग्लोपविकल्पोऽन्त्यदीर्घश्च मनीषादित्वात् साध्य: । यथा अङ्क ञि: अकारलोपे अङ्कि टीविभक्तेर्दि अङ् नकारजावनुस्वारपञ्चमौ झलि धातुषु इति ङस्य न प्रकृतिकत्वे स्यादौ नवद्र इति ङकार हित्वा कि इत्यस्य द्वित्वे कस्य चत्वे निमित्ताभावे नैमित्तिकस्याप्यभाव इति ङस्य नत्वे नस्यानुस्वारत्वे तस्य च अत्वे आञ्चिकदिति अत्र ह्रस्वसन्वद्भावयोरसम्भवात् नाग्लोपित्वं गुणवृद्धोरसम्भवान्न स्थानिवत्त्वमिति ॥ केचित्तु द्वित्वेऽप्यकारलोपस्य स्थानिवत्त्वं मन्वाना: क इत्यस्य द्वित्वे अग्लोपित्वान्न सन्वत्कार्य्यमिति आञ्चकदित्युदाहरन्ति । अन्ये तु ङप्रकृतिं मन्वाना: ङ्कि इत्यस्य द्वित्वे कस्य लोपे आङ्ङिङ्कदित्याहु: । यकारलोपो यथा पापठ्य वावद्यादि यङन्तेभ्य: ञ्रंस्याद इति अप्रत्यये आदौ हसाल्लोप इत्यकारलोपे पुनस्तेनैव यकारलोपे पापचा वावदा इत्यादि ॥ ७७५ ॥

गणकथयो: खि: गणकथखि: तस्य ईङ् स्याद्वा ञे; परेऽङि, ङित्त्वादन्त्यस्य स्थाने ॥ ७७६ ॥

इति चुरादिपाद: ।

## तृतीय चतुर्गणाध्यायः।

## प्रथमः पादः—आन्तः।

---

### ७७७। ञिः प्रेरणे।

ञिः १।, प्रेरणे ७।।

धो ञिः स्यात् प्रेरणेऽर्थे। कुर्वन्तं प्रेरयति कारयति। अचीकरत्। अशशासत्, अडुढौकत्। अशूशवत् अशिश्वयत्। व्यतस्तम्भत्, पर्य्यसीसिवत्। [५७२] साङ्त्वात् न षः। अचीचकासत् अचचकासत्। औन्दिदत् औञ्जिजत् आड्डिडत् आर्चिचत् अररम्भत् अललम्भत्। अजीहयत्, [७४८] अनङ्गीत्युक्तेर्न घिः। अदिध्वनत् अध्वनयीत्, ऐलयीत् ऐलिलत्, आर्द्दयीत् आर्द्दिदत् औनयीत् औनिनत्।

---

प्रेरणं त्वयैतत् क्रियतामिति क्रियासु नियोजनम्। यथा गुरुमन्नं भोजयति अश्वं ग्रामं गमयति शिशुं शाययति। अचेतने तूपचारः। यथा भोजनाभावो वायुं वर्द्धयतीत्यादि। धोरिति व्याख्यानं सर्वधातुग्रहणार्थम्। तेन भवन्तं प्रेरयति भावयति कामयमानं प्रेरयति कामयति चिकित्सयति चोरयति चिकीर्षयतीत्यादि। प्रेरणे ञेः परेऽपि ञिः। यथा पिता पुत्रेण शिष्यं वेदं पाठयति अत्र पुत्रः पाठयतेरेव कर्त्ता न तु पठतेः तेन पुत्रस्य कर्म्मत्वं न स्यात् ञित्त्वादुभयपदं कारयति कारयते पूर्वसूत्रोक्तान्युदाहरति अचीकरदित्यादि। कुर्वन्तं प्रैरिरत् इति ञौ अतएव ञौ द्वित्वे त्रिरिति वक्ष्यमाणनियमात् द्विर्भावात् पूर्वं न वृद्धिः। कर इति स्थिते धातुसंज्ञायां ङिः अमागमः ञिश्रीत्यङि कर इति वर्णद्वयस्य द्वित्वे शेरादश्च इति इकारस्य लोपे ऋमश्चेति ऋकारस्य अकारे ककारस्य चकारे ञिणत्यन्ते ञुङ्तोरिति वृद्धौ आत्ञ्ङः स्व इति आकारस्य ह्रस्वे सेः सन्वद्घौ इति सन्वत्त्वे स्यसेत्सनीति अकारस्य इकारे घोश्च शेर्हसादेर्घश्चेति दीर्घे

## ७७८। स्मृदॄत्वरप्रथम्रदस्तॄस्पशोऽङ्के अंग्ङि चेष्टवेष्टौ स्तु वा।

मृ—स्मश: ६।, अङ् ।१।, खे: ६।, अग्ङि ७, चेष्टवेष्टौ: ६॥, तु ।१।, वा ।१।।

**एषां खेरङ् स्यात् अग्ङि चेष्टवेष्टोस्तु वा। असस्मरत् अददरत् अतत्वरत् अपप्रथत् अमम्रदत् अतस्तरत् अपस्पशत् अचिचेष्टत् अचचेष्टत् अविवेष्टत् अववेष्टत्।**

---

ञेर्लोपे दस्य तकारो वा। एवं सर्वत्र। अशशासदिति आङ्युङ: स्व इत्यत्र शासवर्जनान्न ह्रस्व:। अडुढौकदिति ऋदिद्वर्जनात् न ह्रस्व:। अशूशवदिति प्रागच्कार्य्यादिति नियमादादौ द्वित्वे श्वेर्जिर्वेत्यत्र वाशब्दस्य व्यवस्थया खेर्मूलस्य च जि: ततो ह्रस्वादि पक्षे न जि:। व्यतस्तम्भदिति गुरुधात्वक्षरपरत्वान्न सन्वद्भावादि साङ्त्वात् न ष:। पर्य्यसीषिवदिति साङ्त्वात्पर्य्यादिनिमित्तकं खे: षत्वं न स्यात् खिनिमित्तकं मूलधातो: षत्वं क्विलादित्वेन स्यादेवेति श्रीपतिदत्त:। एवं पर्य्यसीषहदित्यत्रापि बोध्यम्। अचचकासदित्यादि ऋदित्त्वादुङो ह्रस्वाभावे अनेकाक्षत्वात् सन्वद्भावादि विकल्प:। औन्दिददित्यादि उन्दधो क्लेदे उज्ज आर्जवे अद्दङ अभियोगे अर्चञ्च पूजे इति अन्तानां चतुर्णाम् उन्दि उज्जि अद्दि अर्चि इति स्थिते नाजन्तादेरिति आद्यक्षरं द्वित्वा स्यादौ नवद्र इति न व द रांश्च द्वित्वा दि जि ड़ि चि एषां द्वित्वम्। अररम्भदित्यादि तुण् रध इति तुणि गुरुधात्वक्षरपरत्वात् न सन्वद्भावादि। अजीहयददिति हे: खेरनङीत्यत्र अनङीत्युक्ते नंधि:। अध्वनयीदित्यादि मिध्वन रवे इलश शदे गतौ अर्दञ बधे ऊनत्क परिहाणे एभ्यो अग्न्तेभ्य: श्वि घेट ध्वन्येत्यर्दूनैस्तु वेति अङ् वा। पक्षे ध्यां सौ अङि श्विजागुर्न्निरिति निषेधात् न त्रि: ॥ ७७७ ॥

स्मृ स्मृतौ स्मृ म औत्के इति द्वयम्। दृयगि विदारे। ञित्वर धमङ स्वरे। प्रथमयङ् चौदे स्तङगि क्षादने स्पशञ ग्रन्थबाधयो:। एषां सप्तानां खेरङ् विधानसामर्थ्यात् स्पसेतमनीति इ नं स्यात्। धौश खेर्द्धसादे धंश्चेत्यपि न स्यात्। चेष्टवेष्टोस्तु खेरङोऽप्राप्तिपक्षे गुर्वक्षरपरत्वात् सन्वद्भावस्याप्राप्तौ तदेकयोगनिर्दिष्टत्वात् खेर्दीर्घोऽपि न स्यात् ॥ ७७८ ॥

**७७९। भ्राज भास भाष दीप जीव मील पीड़ कण क्वण भण श्रण लप लुप लुट हेठां वोङः स्वः।**

भ्राज-हेठां ६।॥, वा ।१।, उङः ६।, स्वः १।।

**एषाम् उङः स्वः स्यात् वा ञ्यडि। अबिभ्रजत् अबभ्राजत्।**

**७८०। वर्दुङो धुः।**

वा ।१।, ऋदुङः ६।, धुः १।।

**ऋदुङो धोर्धुरेव स्यात् वा ञ्यडि। अवीवृतत् अववर्त्तत्।**

**७८१। स्वपो जिः।**

स्वपः ६।, जिः १।।

**स्वपो जिः स्यात् ञ्यडि। असूषुपत्।**

---

भ्राज ङ वृ टु भासि। भास ङृएु भासि दन्त्यान्ततालव्यान्तोऽपि। भासृ ङ दीप्तौ भाषङ्ऋ वाचि। दीपीङ्यृ दीपने। जीव ऋ प्राणे। मीलृ निमेषे। पीड़्क बाधगाहे। कणृ आर्त्तस्वरे। ऋक्वण शब्दे ऋभण शब्दे। श्रण क दाने। ऋ लप भाषे। लुपृ श्रप लृ औ छेदे। ऋलुञ्च विलोटविलोड़योः। हेठृ ञ बाधे पीड़णेते। अबिभ्रजत् अबभ्राजत् अबिभ्रसत् अबभासत् अबीभसत् अबभसत् अबीभषत् अबभाषत् अदीदिपत् अदिदीपत् अजीजिवत् अजिजीवत् अमीमिलत् अमिमीलत् अपीपिड़त् अपिपीड़त् अचीकणत् अचकाणत् अवीक्वणत् अवक्वाणत् अबीभणत् अबभाणत् अशिश्रणत् अशश्राणत् अलीलपत् अललापत् अलूलुपत् अलुलोपत् अलूलुटत् अलुलोटत् अजीहिठत् अजिहेठत्। कविकल्पद्रुमे भास ङृएु इत्यस्य सप्तमस्वरानुबन्धः श्रणक दाने इत्यस्य च अष्टमस्वरानुबन्धाभावः कस्यचिदनुरोधात्। हेञै इत्यस्येह सूत्रे पाठः प्रमाणशून्य एव॥ ७७९॥

ऋत् उङ् यस्य स ऋदुङ् तस्य। तस्य स्थाने तद्वालादेशौ ञ्यडि वा स्यादित्यर्थः। अवीवृतत् अववर्त्तत्। एवं अवीवृधत् अववर्द्धत् अमीमृजत् अममार्जत् अचीक्लिपत् अचकल्पत् इति तु ऋदुङ प्रकृतिकत्वात्। वा ग्रहणात् परत्र वाधिकारनिवृत्त्यर्थम्॥ ७८०॥

## ७८२ । शा च्छा सा ह्वा व्ये वे पां जौ यः ।

शा—पां ६॥, जौ ७।, यन् ।१। ।

एषां जौ परे यन् स्यात् । शाययति पाययति ।

## ७८३ । ह्वेः पिबः पीप्यो ञाङि ।

ह्वेः ६।, पिबः ६।, पीप्यः १।, ञाङि ७। ।

अपीप्यत् ।

## ७८४ । क्ली व्ली री क्नू व्यृ च्माय्यातां पण् गुश्च जौ ।

क्ली—आतां ६॥, पण् ।१।, गुः १।, च ।१।, जौ ७। ।

क्लेपयति व्लेपयति रेपयति क्नोपयति अर्पयति च्मापयति स्थापयति ।

---

अनुपदिति तु आदौ जिः पश्चात् द्वित्वे घोश्च खेर्हसादेरिति दीर्घः क्विलादिति षः ॥ ७८१ ॥

शोय निशाने छोय लूनौ षोय नाशे ह्वेञ् स्पर्द्धे व्येञ् वृतौ वेञ् ऐञ्जवे स्यूतौ पा पाने पै शोषे इति द्वयम् । एषां सप्तानां जौ यन् स्यात् नित्त्वादन्ते । शाययति छाययति साययति ह्वाययति व्याययति वाययति पाययति ॥ ७८२ ॥

ह्विर्भूतस्य पा पाने इत्यस्य पीप्यः स्यात् ञाङि । पिबः किम् ? पै अपीपयत् । पाल रक्षणे अपीपलत् ॥ ७८३ ॥

क्लीलि लज्जे व्लीगि गत्यां आरीङष चरणे रीगि रधे गतौ इत्युभयम् । क्नूयीङ् दुर्गन्धे ऋश हिंसे ऋलि गत्याम् ऋ प्रापे च इति त्रयम् । च्मायीङ् विधूनने इति षण्णामादन्तानाञ्च जौ पण् स्यात् यथासम्भवं गुणश्च । क्लेपयतीत्यादौ खित्त्वादन्त्याचः परे पणि कृते पस्यापि धात्ववयवत्वात् लघूञोऽभावात् अप्राप्तौ गुणविधानम् । क्नोपयतीत्यत्र पकारात् परतया हसाल्लोप इति यलोपः । एवं च्मापयतीत्यत्रापि । स्थापयति । आदिष्टादन्तानाञ्च ग्रहणात् दैङ् पालने दापयति डुक्रीञ् क्रापयतीत्यादि ॥ ७८४ ॥

## ७८५। स्थोङो ञ्यङी:।

स्थोङ: ६।, ञ्यङि ७।, इ: १।।

तिष्ठते: उङ इ: स्यात् ञ्यङि। अतिष्ठिपत्।

## ७८६। घ्री वा।

घ्र: ६।, वा ।१।।

अजिघ्रिपत् अजिघ्रपत्।

## ७८७। पाति-स्फायोर्लन्वङौ ञौ।

पाति-स्फायो: ६॥, लन्-वङौ १॥, ञौ ७।।

पालयति स्फावयति।

## ७८८। प्री-धूञोर्नन् वा।

प्री-धूञो: ६॥, नन् ।१।, वा ।१।।

प्रीणयति प्राययति, धूनयति धावयति।

---

स्था इत्यस्य उङ् स्थोङ् तस्य पणि कृते स्थाप इत्यस्य उङ इत्यर्थ:। अतिष्ठिपदिति पणि कृते आकारस्य इकारे क्विलादिति ष:॥ ७८५॥

घ्राधातो: पणि कृते घ्रापभागस्य उङ इ: स्याद्वा ञ्यङि। इकारे अजिघ्रिपदिति। इकाराभावपक्षे ञ्यङ्युङ: ख इति ह्रस्वे सन्वद्भावे खेरित्वे खेर्गुरुत्वात् दीर्घाभावे अजिघ्रिपदिति॥ ७८६॥

पाल रक्षणे इत्यस्य लन् स्फायी ङ वृद्धावित्यस्य वङ् स्यात् ञौ॥ ७८७॥

प्रीश्च धूश्च प्रीधुवौ। प्रीधुवौ च तौ ञौ आनुबन्धौ चेति तयो:। प्रीञ तर्पणे प्रीगञ कान्तौ च इति द्वयो: प्रीणयति प्राययति ञानुबन्धग्रहणात् प्रीक तर्पणे इत्यस्य तु यं प्राययन्ति कविसूक्तिरसायनानीति हलायुध:। प्रीङ्य प्रीतौ चेत्यस्यापि प्राययति। धूञिक कम्पे इत्यस्य तु वायुर्विधूनयति केशरपुष्परेणूनिति हलायुध:। अत्र स्वार्थविहितञेर्ञकारेण सम्बन्धात् नन्। अन्यथा कम्प प्रेरणे धूनयतीत्यादि प्रयोगा न स्यु:। धूनीत्यादीनां साध्या इति चेत् तर्हि स्वभावात् कम्पप्रेरणार्थानां तेषां ञौ कृते कम्पप्रेरणस्य प्रेरणमेवार्थ: स्यात्। किन्तु कम्पनायां धूनयतीत्यादीनामवश्यम्भावे अत्र ञे सूत्रकार: प्राचीनमतानुरोधार्थ:॥ ७८८॥

## ७८९। रुहः पङ् वा।

रुहः ६।, पङ्।१।, वा।१।।

रोपयति रोहयति।

## ७९०। शदोऽगतौ तङ्।

शदः ६।, अ-गतौ ७।, तङ्।१।।

शातयति। गतौ तु गाः शादयति गोपः।

## ७९१। लाल्योर्लन् ननौ स्नेहद्रवे वा।

ला-ल्योः ६॥, लन्-ननौ १॥, स्नेहद्रवे ७।, वा।१।।

लातेर्लन् लियो नन् स्यात् स्नेहद्रवेऽर्थे ञौ वा। विलालयति विलापयति। विलीनयति। [ ७४५ ] मिग्योरिति ङा वा, विलापयति विलाययति घृतम्। स्नेहद्रवे किं? लोहं विलाययति विलापयति।

## ७९२। वो जन् धूतौ।

वः ६।, जन्।१।, धूतौ ७।।

वातेर्जन् स्यात् कम्पने ञौ। वाजयति। धूतौ किं? केशान् वापयति।

---

ञिजरुहौ जन्यामित्यस्य पङ् स्याद्वा ञौ। वा ग्रहणं परत्र वाधिकारनिवृत्त्यर्थम्। ननु रोहते रुप्य इर्विमोहि इति द्वयोः रोहयति रोपयतीति सिद्धौ रुहः पङ् विधानं कथमिति चेन्न। रोपयतीति पदेन जननप्रेरणस्य बोधयितुमशक्यत्वात्॥ ७८९॥

शद्लृजौ शाते इत्यस्य तङ् स्यात् ञौ न तु गतौ। शातयति वृक्षात् फलं लोकः पातयतीत्यर्थः। गतौ तु गाः शादयति गोपः अनेकार्थत्वाद्गत्यर्थोऽपि॥ ७९०॥

स्नेहस्य घृतादेर्द्रवो द्रवीकरणं स्नेहद्रवः। ला लश ग्रहे लीकि द्रावणे इत्यनयोर्ग्रहणम्॥ ७९१॥

वाजयति लतां वायुः कम्पयतीत्यर्थः। धूतौ किं केशान् वापयति परिष्करोतीत्यर्थः॥ ७९२॥

## ७९३। क्रीजीङोऽजा चिस्फुरप्रजनार्थवीनान्तु वा।

क्री-जि-इङः ६।, अच् ।१।, आ ।१।, चि-स्फुर-प्रजनार्थवी-नां ६।।।, तु ।१।, वा ।१। ।

एषाम् अच आ स्यात्, जौ च्यादेस्तु वा। क्रापयति जापयति अध्यापयति। अध्यजीगपत् अध्यापिपत्। चापयति चाययति। चपयति चययति। [७९८] मित्त्वात् ह्रस्व इति प्रक्रियारत्ने दृष्टम्। स्फारयति स्फोरयति। वापयति वाययति गाः पुरोवातो गर्भं ग्राहयति इत्यर्थः।

## ७९४। स्मिभ्यो घात् ध्वर्थे मञ्च।

स्मिभ्योः ६।।, घात् ५।, ध्वर्थे ७, मं १।, च ।१। ।

अनयोरच आ स्यात् घात् ध्वर्थे जौ मञ्च। विस्मापयते भापयते मुण्डः। घात् किम्। कुञ्चिकयैनं विस्माययति भाययति।

---

प्रजनो गर्भग्रहणम् अर्थो यस्य स प्रजनार्थः प्रजनार्थश्चासौ वीश्चेति प्रजनार्थवीः। चिश्च स्फुरश्च प्रजनार्थवीश्च ते तेषां वीनामिति नुमागमः सूत्रत्वात्। डुक्रीञ्ग द्रव्यविपर्यये जि जये अधीङ्गध्ययने। एषामच आ स्यात् जौ। च्यादेस्तु वा। अध्यजीगपदिति ण्यां वा आङ् सनीस्तु वेति गादेशे पौ णे गापे-र्द्वित्वे उङ्ह्रस्वादिः। पक्षे इकारस्य आकारे आपि इति स्थिते नाजन्तादेरिति निषेधात् पि इत्यस्य द्वित्वे अध्यापिपदिति चापयतीत्यादि सुगमम्। स्फारयति स्फरतिर्नैवेष्टसिद्धौ स्फुरतेरुकारस्याकारविधानं स्फरते कातन्त्राद्यसम्मतत्वात्। अत्र वाशब्दस्य व्यवस्थावाचित्वात् सिध्यते रिकारस्य जौ परे आकारः स्यात् अपारलौकिके। घटं साधयति पदं साधयति। अपारलौकिके किं ? यज्ञं सेधयति। यावद् यते साधयितुं तदर्थमिति रघौ। अपारलौकिकविवक्षया सिद्धम्। औम-रास्तु लिखि वण्ट लस्जीनां लिखाप वण्टाप लज्जाप जौ वा। इत्यादिस्थः लिखापयति लेखयति वण्टापयति वण्टयति लज्जापयति लज्जयति इत्याहुः ॥७९३॥

विस्मयो भयश्च यदि ज्यन्तकर्त्तुर्हेतोः प्रतीयते तदा अनयोरच आ स्यात् जौ मञ्च। मुण्ड इति मुण्डो मुण्डितमस्तको जनः। एवं विस्मापयते भापयते व्याघ्रः। कुञ्चिकया एनं जनं विस्माययति भाययति कुञ्चिका मत्स्यभेदः एवं रूपेण तं विस्माययति खड्गेन मां भाययति। विस्मापयन् विस्मयनीयकीर्त्ति

## ७९५ । भीर्भीष् वा ।

भी: १, भीष् ।१, वा ।१।

भियो घ-भये भीष् स्यात् वा ञौ मश्च । भीषयते मुण्ड: ।

## ७९६ । दुषेरोदूः ।

दुषे: ६।, ओत् ।१।, ऊ: १।

दुषेरोकार ऊः स्यात् ञौ । दूषयति ।

## ७९७ । चिद्विकारे वा ।

चिद्विकारे ७।, वा ।१।

दूषयति दोषयति चित्तम् ।

## ७९८ । घटादि जनी जॄष क्नस रजाम मारतोषनिशाननिशामार्थ-ञ्जां स्वोऽकमामचमो ञौसमोस्तु घंश्च जागुश्च ।

घटादि—ञ्जां ६।।, स्व: १।, अकमामचम: ६।, ञौसमो: ७।।, तु ।१।, घं: १।, च ।१।, जागु: ६।, च ।१।

घटाद्यादेरमन्तस्य माराद्यर्थ-ञ्जस्य ञौ स्व: स्यात् न तु कमा-

---

भूपालसिंह निजगाद सिंह इति रघौ। विस्मापयन्निति विस्मापनं विस्माप: विस्मापं करोतीति ञौ साध्यम् ॥ ७९४ ॥

भीषयते भापयते व्याघ्र: । घात् किं ? खड्गेन तं भाययति ॥ ७९५ ॥

इर्दुष्यौ वैकृते इत्यस्य ञिनिमित्तके गुणे कृते ओकारस्य ऊ: स्यादित्यर्थ: अन्यथा दुषेर्घ इत्यनेनैवेष्टसिद्धौ दुषेरोदूरिति गौरवं व्यर्थं स्यात् । यथा अधर्मस्तान् जनं दूषयति दूषयामास दूषयिष्यति ञिनिमित्तके गुणे किं दोषणं दोष: घञ् दोषं करोति दोषयति अत्र घञ्निमित्तकस्य ओकारस्य ऊर्न स्यात् । दूषणमित्यादिकन्तु ञ्यन्तस्यैव ॥ ७९६ ॥

चेततीति चित् मन: तस्य विकारश्चिद्विकार: । तस्मिन्नर्थे दुषेर्ञौ कृते ओकार ऊ: स्याद्वा । दूषयति दोषयति चित्तं क्रोध इति शेष: ॥ ७९७ ॥

**मचमां, ञेः परयोरिण् णमोस्तु घंश्च जागुश्च ह्रस्वो घः ।
घटयति व्यथयति प्रथयति, जनयति जरयति क्नसयति, रज-
यति मृगान् रमयति, ज्ञपयति । कमादेस्तु कामयति
आमयति चामयति ।**

---

मारश्च तोषश्च निशानञ्च निशामश्च ते। तेऽर्थौ यस्य स मारतोषनिशान-निशामार्थः। स चासौ ज्ञाश्चेति मारतोषनिशाननिशामार्थज्ञाः। घटादिश्च जनीश्च जृषश्च क्नसश्च रञ्जश्च अमश्च मारतोषनिशाननिशामार्थज्ञाश्च ते तेषाम्। कम च अम च चम चेति कमामचम् न कमामचम् अकमामचम् तस्य इण् च णम् च इणमौ। ञेः परौ इणमौ ञीणमौ तयोः। घटषङ्च चेष्टे घटयति। घटक हिंसासङ्घातद्युतिषु इत्यस्य तु घाटयति कुलचन्द्राद्यनुरोधात् जनमलिचेत्य-स्यापि सानुबन्धत्वे जनीति ग्रहणं प्राचीनमतानुवादार्थम्। जरयति जृषग्रहणात् जृगिक ज्याने इत्यस्य जारयति क्नसुम्युद्धृतौ क्नसयति। रजयति मृगानिति रञ्जमोञ रागे ञौ तु मृगमरणे इति नलोपे ञिण्यन्ते जुङ्सोरिति वृद्धौ ह्रस्वः। रमयति एवं गमयतीत्यादि। संक्रामयतीत्यादिकन्तु क्रमः शत्प्रत्यये अपि क्रमः पऽमीति दीर्घं संक्रामन्तं करोतीति ञौ टेर्लोपे साध्यम्। ज्ञपयति शत्रुं शूरः मारयतीत्यर्थः। ज्ञपयति पुत्रं पिता तोषयतीत्यर्थः। निशानं तीक्ष्णीकरणं ज्ञपयति खड्गं कर्मकारः शोशांसतीत्यर्थः। निशामो दर्शनप्रेरणं ज्ञपयति रूपं कामिनी स्वीयगात्राणि दर्शयतीत्यर्थः। निशामो ज्ञानप्रेरणम् इति न्यासरक्षितौ। अतएव क्रमदीश्वरोऽपि ज्ञानातेर्घटादित्वं विभाषया मन्यते तेन ज्ञापयितुं बोध-यितुमिच्छमाणो ज्ञीप्सयमान इति पाणिनीयवृत्तौ ज्ञानप्रेरणेऽपि ह्रस्वे सति ज्ञीप्समान इति सिद्धम्। एवं विज्ञतिरेषा मम जीवबन्धो इत्यादिषु च विज्ञापन-मेवार्थः। ञीणमोस्तु अघटि अघाटि घटं घटं घाटं घाटमित्यादि कमादेस्तु कामयते इति ञिङि रूपम्। प्रेरणञौ तु कामयति कामयते। जागुश्चेति जागर्त्तेर्ह्रस्वः स्यात् पुनर्ह्रस्वस्यैव दीर्घः स्यात् ञेः परयोरिणमोरित्यर्थः। यथा गुरुणा शिष्योऽजागरि अजागारि गुरुः शिष्यं जागरं जागरं जागारं जागारं शेते। घटादिस्तु। घट यमङ चेष्टने नट् स नृतौ भट म भाषणे। वह्नौक्तौ गड्म सेकेऽथ लभोन्मयनविह्वयोः। यपल्क चेपणे ज्ञाकम मारणादौ अथम् वधे जृद्रषंस्यतु हद्दत्वे दृगि दृम भये मतौ। श्राअ पाके स्मृमोत्कोऽथ व्यथसाङ भयादिषु।

## ৭৯৯। ज्वल ह्वल ह्मल ग्ला स्ना वन रम नमोऽगेर्वा ।

ज्वल—नमः ৬।, अ-गेः ৬।, वा ।১। ।

**एषामगेनां ह्रस्वः स्यात् वा ञौ। ज्वलयति ज्वालयति, ग्लपयति ग्लापयति। अगेः किम् ? प्रज्वलयति प्रग्लापयति।**

## ৮০০। वा शम यम फण गिस्खदाम् ।

वा ।১।, शम-यम-फण-गि-स्खदाम् ৬॥ ।

**एषां ह्रस्वः स्यात् वा ञौ। शमयति शामयति यमयति यामयति, फणयति फाणयति, परिस्खदयति परिस्खादयति।**

---

नृगि नृम् नयने श्रैम पाके कम्रे क्रियासु तु। अक्राग्म वक्रगत्यान्तु कखम हासे वनम् गतौ। चकजङ्मष्टकस्तक्म प्रतीघाते कणम् गतौ। रग्म शङ्के लगे सङ्गे यग ष्टगसग स्थगे। क्रग ह्लग्मे तु संवृत्यां वजि व्रजङ् गतौ त्यजि। रन्जरन्जौ ञ रागेऽथ चणम् दाने श्रणम् तथा। हेड् मवेष्टे प्रथङ् ख्यातौ क्रथ क्लथ क्नथम् वधे। कदक्रदक्लदस्मङ वैक्लव्यविकलत्वयोः। मदीभिर्यमदे ग्लेपे छदकिञ् तूर्जने मतः। म्रदयङ् चोदने स्खदङ विदारे चन्म हिंसने। जनीमङ् जनने अन्मलिकृत्यत्तौ क्नपमङ। कृपायां चप कम कल्कौ ज्ञपकृज्ञपौ त्वरङ् स्वदे। ज्वरमे रोगे च लज् कम्पे ज्वलजम्चलनत्विषोः। कलकजीवेह्वलह्मल्म चलने तु क्ससङ भये। जच्छिङ दाने दचमषङ हन्त्यर्थे क्रसुमहृतौ। प्रसङ प्रसवे तत्वां वनुम् व्याप्तौ तथा। चहक्म शठतायां स्यात् घटादिस्तु विसप्ततिः। चन्मि हिंसे गतां चिविम चयने फणमिण् गतौ। ध्वन्मि शब्दे ष्टनस्तन्मि रवे स्वनमि तसने। त्रपूषमिङ लज्जायां यमक्मि परिवेशने। तदभावे दल्मिभेदे स्खल्मि स्यात् चलने चये। मिलणस्तु निवासस्य दर्योर्बलमिङ स्मृतौ। इति त्रयोदश ख्याता धातवो वा घटादयः ॥ ৭৯৮ ॥

ज्वलजम चलत्विषोः ह्वलह्मल्म चालि ग्लै क्लमे ष्णाल शौचने वनुमव्याप्तौ। णाजटुवमीदिगरि। नमौ शब्दनत्योः। ग्लास्नोरप्राप्तौ अन्येषां नित्यप्राप्तौ विकल्पः। अगेः किं ? प्रज्वलयतीत्यादौ नित्यं ह्रस्वः। प्रग्लापयति प्रस्नापयतीत्युभयत्र न ह्रस्वः ॥ ৭৯৯ ॥

## ८०१ । हनस्तङ्णाविणि ञ्णिति ।

हन: ६।, तङ् ।१।, अ-णप् इणि ७।, ञ्णिति ७।।

ञिति णिति च परे हन्तेस्तङ् स्यात् न तु णपि इणि च । घातयति ।

## ८०२ । यि: सन् वेर्ष्यो द्विः ।

यि: १।, सन् ।१।, वा ।१।, ईर्ष्य: ६।, द्वि: १।।

ऐर्ष्यियत् ।

इति अग्रन्तपादः ।

---

वाशब्दस्य व्यवस्थावाचित्वात् समुभिर्यशमि इत्यस्य नित्यं ह्रस्वः । शमयति रोगं वैद्यः । शलङ्कालोचे इत्यस्य नित्यं ह्रस्वाभावः । निशामयति काव्यं सुधीः प्रणिदधातीत्यर्थः । निशामय तदुत्पत्तिं विस्तराद्गदतो मम इति । यमकमि परिवेशने तदभावे यमयति यामयत्यन्नं गृहिणी । यमो उ विरतौ इत्यस्य तु नित्यं ह्रस्वः । नियमयसि विमार्गप्रस्थितानात्तदण्ड इति शाकुन्तले । फणमिणगतौ फणयति फाणयति फणणानि सेद्दे इत्यस्य फाणयतीत्येव । स्वदमषङ विदारे परिस्वदयति परिस्वादयति अवस्वदयति अवस्वादयति अवपरिभ्यां परस्यैव वा ह्रस्वः इति कालन्वादाः अत्रापि अवस्थाने इति इति भीमः । अन्य पूर्वस्य केवलस्य च प्रस्वदयति स्वदयतीत्युभयत्र घटादित्वात् नित्यं ह्रस्वः ॥ ८०० ॥

णप् च इण् च णबिण् न नबिण् अणबिण् तस्मिन् । ञ च ण च ञ्णौ ञ्णावितौ यस्य स ञ्णित् तस्मिन् । ञौ घातयति घञि घातः णमि घातं घातम् । णबिणोस्तु जघान अघानि ॥ ८०१ ॥

ईर्ष्यो यिरेव द्विः स्यात् द्वित्वहेतौ सतीत्येकोऽर्थः । सनि क्वते तु यिर्वा द्विः स्यात् सनि वा द्विः स्यादित्यपरोऽर्थः । यथा ईर्ष्यो ञौ क्वते यलोपस्य नित्यत्वेऽपि येर्द्वित्वविधानज्ञापकत्वात् हसाल्लोप इत्यनेन यलोपाभावे इर्ष्यि इत्यस्य धातुसंज्ञायां ङ्यामङ् नाजन्तादेरिति आदिं हित्वा यादौ नबद्र इति रेफं हित्वा अनेन यकारस्य द्वित्वे थि इत्यस्य द्वित्वे ञेर्लोपे ऐर्ष्यियदिति । सनि तु वसोरस्येतीसि द्वित्वे ईर्ष्यियिषति सनो द्वित्वे ईर्ष्यिषिषति ॥ ८०२ ॥

इति अग्रन्तपादः ।

# द्वितीयः पादः—सनन्तः ।

---

## ८०३ । सन्निच्छायाम् ।

सन् ।१।, इच्छायाम् ७। ।

**धोः परः सन् स्यात् इच्छार्थे । अत्तुमिच्छति जिघत्सति । दिदासते दिदीषते, दिद्योतिषते, उतिच्छिषति उचिच्छिषति अधिजिगापयिषति अध्यापिपयिषति, शुशावयिषति शिश्वाययिषति जुहावयिषति ।**

---

यस्य धातोर्योऽर्थस्तद्विषयायामिच्छायां तद्धातोः सन्नित्यर्थः । इच्छायामिति सामान्योक्तावपि तुमुगर्भायामेव । इत्यत आह अत्तुमिच्छतीति तुमुगर्भायामिच्छायां सन्निति जौमराः । इच्छासनन्तात् न सन् । इच्छायामिच्छायान्तरासम्भवात् । स्वार्थसनन्तात्तु स्यादेव । चिकित्सिषतीत्यादि । अचेतनस्य इच्छाया असम्भवेऽपि नदीकूलं पिपतिषतीत्यादौ विवक्षायां सन् एवं श्वा मुमूर्षतीत्यादावपि विवक्षयैव सन् । पूर्वतो वाशब्दानुवृत्तौ पक्षे वाक्यस्यापि स्थितिः । सन्निति अकारान्तः । तेन अटगतौ अटिटिषतीत्यादौ नाजन्तादेरिति अकारादेर्न द्विः । जिघत्सतीति अदौ सन् घस्लद इदि घसादेशे सत् स्वरे इति सस्य त द्वित्वादि तिप् शप् लोपोऽत इति सनो अकारलोपः । दिदासते इत्यादि दीङ्क्षयां यन्निति ङा वा । दिद्योतिषते इति द्युत्स्वाप्योरिति खेर्जिः । उतिच्छिषतीत्यादि उच्छीशबन्धसमापने सन् इति उच्छिष इति स्थिते उकार हित्वा छिष इत्यस्य द्वित्वे यस्य लोपे छ्वर्गाद्योरिति खेश्छकारस्य तकारो वा । अधिजिगापयिषतीत्यादि अधीङ्ल अध्ययने ञ्यन्तात् सनि ठ्यां गां ञ्यङ् सनीस्तु वेति गादेशे आदन्तत्वात् पण् । पक्षे क्रीजीङ इति आकारे पण सन् इमि आपयिष इति स्थिते पयिष इत्यस्य द्वित्वम् । शुशावयिषतीत्यादि टुओश्वि ञ्यन्तात् सनि ञौ द्वित्वे त्रिरिति नियमात् श्वेर्जिर्वेति ञौ कृते द्वित्वं ततो त्रिः । जुहावयिषतीति ह्वयतेर्ञ्यन्तात् सनि ञौ द्वित्वे त्रिरिति नियमात् द्वित्वे सति ह्वोर्वेर्जिरिति ञौ कृते ह्वाभागस्य अलाभात् शाच्छासाह्वेति यणोऽभावे वृद्धिः ॥ ८०३ ॥

## ८०४। णुर्नानिमि।

णुः १।, न ।१।, अनिमि ७।।

अनिमि सनि णुर्न स्यात्। विवृत्सति विवर्त्तिषते, निनृत्सति निनर्त्तिषति, तितरीषति तितरिषति तितीर्षति।

## ८०५। घोंऽज्झनिङ्गमाम्।

घः १।, अज्झनिङ्-गमाम् ६।।।

अजन्तस्य हन्तेः इङः स्थाने जातस्य गमश्च घः स्यात् अनिमि सनि। दुध्वूर्षति दिध्वरिषति। वुवूर्षति विवरीषति विवरिषति, सञ्चिस्कीर्षति, जिगीषति, चिकीषति चिचीषति, जिघांसति।

## ८०६। गमीनिङोः।

गमि ।१।, इन्-इङोः ६।।।

इनिङोः स्थाने गमिः स्यात् सनि। जिगमिषति, अधिजिगांसते।

---

विवृत्सतीति वृद्भ्यो नेम् इति इम् निषेधे गुणनिषेधः। अनिमि किं? विवर्त्तिषते। निनृत्सतीति वृत्क्रादित्यनेन इमोऽभावपक्षे गुणाभावः। तितरीषतीत्यादि स्याद्वृद्दुरिति वेमि वृतो वेम इति वा दीर्घः। अनिम् पक्षे नुर्णानिमि अगुणत्वादि व्यंनच्तशीति दीर्घः॥ ८०४॥

इङो गम् इङ् गम्। अच्च हन् च इङ्गम् च ते तेषाम्। दुध्वूर्षतीत्यादि। ध्वृ कौटिल्ये स्याद्वृद्दुरित्यनेन अनिम् पक्षेऽनेन दीर्घः। ऋदिरणावित्युरि ह्रासि परेऽच् कार्य्यात् परं द्वित्वमिति नियमात् ध्वूर्ष इत्यस्य द्वित्वमिति। वुवूर्षतीत्यादि वृञ स्याद्वृद्दुरित्यनिम् पक्षे दीर्घे ऋदिरणावित्युरि द्वित्वम्। इम् पक्षे वृतो वेम इति इमो वा दीर्घः। सञ्चिस्कीर्षतीति स्याद्वृद्दुरित्यत्र स्कृवर्जनात् न वेम् नेमेकाजिति इमो निषेधे दीर्घोऽगुणत्वादिर्। जिगीषतीति जेर्गिः सनड्योरिति जेर्गिः घोंऽज्झनिङ्गमामिति दीर्घः चिकीषतीति चेः किर्वा। जिघांसतीति हनलौ हिंसने खेर्ह्रोघोऽञ्णिति च इति हस्य घः अनेन दीर्घः। अनिम् सनोऽगुणत्वेऽपि वनतनेति न लोपाभावबीजं दभीया विश्यत्र लेख्यम्॥ ८०५॥

## ८०७। नेमुगुहग्रहः।

न ।१।, इम् ।१।, उ-गुह-ग्रह: ५। ।

उवर्णान्तात् गुहो ग्रहस्य सन इम् न स्यात्। जुहूषति बुभूषति जुघुक्षति।

## ८०८। ग्रहस्वपप्रच्छां जिः।

ग्रह:-स्वप-प्रच्छां ६।, जि: १। ।

एषां जि: स्यात् सनि। जिघृक्षति सुषुप्सति।

## ८०९। स्मिङ पूङ रनृजशू किर गिर द्रिय धिय प्रच्छ इम्।

स्मिङ-पूङ-ऋ-अनूज्-अशू—प्रच्छ: ५।, इम् ।१। ।

एभ्य: परस्य सन इम् स्यात्। सिस्मयिषते पिपविषते अरिरिषति अञ्जिजिषति अशिशिषते चिकरिषति पिपृच्छिषति।

---

गमधातुरादिश्यते जिगमिषतीत्यादि इण गतौ सनि गमादेशे गमोऽसे इति इम्। अधिजिगांसते इति अधीङ्ध्ययने सनि गमादेशे घोंज्झनिङ्मामिति दीर्घ:। गमधातुनैवेष्टसिद्धौ इणो गमादेशविधानं विफलमिति इण गताविल्यस्य सनन्तस्य प्रयोगनिषेधार्थमिति चेत्। इगत्यामिति भौवादिकस्य प्रतियिषति इत्यादेरवश्यम्भावे तन्निषेधं नाप्यलम्। ततश्च इणगमादेशो ज्ञापयति ये गत्यर्थास्ते ज्ञानार्था इति न्यायेन बोधार्थस्येणधातोर्गमादेशो न स्यादिति। तेन इणधातोर्गमनार्थे जिगमिषति बोधार्थे प्रतियिषति इति सिद्धम्। उपास्तौ श्रवणेच्छायां श्रणोते: सन् विधीयते। गुरुं शुश्रूषते शिष्य: लोकं शुश्रूषते गुणी ॥ ८०६ ॥

ह्रस्वोदन्तस्य यु: सुखूषति नु नुनूषति चु चुचूषति। दीर्घोदन्तस्य बुभूषति जुहूषतीति ह्वेञ: सनि द्वित्वे ह्वोदेरिति जौ कृते घोंऽज्झनिङ्मामिति दीर्घ:। जुघुक्षतीति गुह: सन् हो ढो भाविति हस्य ढत्वे झभान्तस्येति गस्य घत्वे षढो: क: से इति ढस्य कत्वम् ॥ ८०७ ॥

जिघृक्षतीति ग्रह: सन् पूर्वेण इम् निषेधे अनेन जि: हस्य ढे झभान्तस्येति गस्य घ:। सुषुप्सतीति औदित्वात् नेम् जौ कृते द्वि: क्विलादिति ष: ॥ ८०८ ॥

स्मिङ् च पूङ् च ऋश्च अनूज च अशूश्च किरश्च गिरश्च द्रियश्च धियश्च प्रच्छ

## ८१० । भ्रस्ज श्रि स्वृ यूर्णु भर दरिद्रा सन तन पत ज्ञपर्द्धिदन्भिवो वा ।

भ्रस्ज—इथं: प्र।, वा ।१। ।

एभ्यः सन इम् स्यात् वा । बिभर्जिषति बिभ्रज्जिषति बिभ्रक्षति, शिश्रयिषति शिश्रीषति सिस्वरिषति सुस्वूर्षति, यियविषति युयूषति, ऊर्णुनुविषति ऊर्णुनविषति ऊर्णुनूषति, बिभरिषति बुभूर्षति दिदरिद्रिषति दिदरिद्रासति, सिसनिषति सिषासति तितनिषति तितंसति, तितांसति इत्येके । पिपतिषति ।

---

चेति तस्मात् । ष्मिङो ङकारः सुखार्थः ष्मिङ ऋ दृ धृ एषां नेमिकाजित्यनेन पूङो नेसुगुहग्रहेति प्रच्छ औदित्वादप्राप्तौ । अन्ज अशू एतयोरूदित्वात् । कॄ गॄ एतयोः स्यादृदृदुरित्यनेन वेमत्वे नित्यार्थमिम् विधीयते । सिस्मयिषते इति ष्मिङोः खेरिति नियमान्मूलधातोः षत्वं न । पूङ शौचे पिपविषते इति सनि अनेन इमि प्रागच्कार्य्यादिति नियमादादौ द्वित्वे गुणे सन्धौ च जयल्पोरिति वक्ष्यमाणात् खेरुकार इः । ऋ गतौ अरिरिषतीति सनि इमि प्रागच्कार्य्यादित्यत्र वाशब्दीयव्यवस्थया आदौ गुणे नाजन्तादेरिति अकारं हित्वा रिष इत्यस्य द्वित्वम् । अञ्जिजिषतीति अन्ज सन् इम् स्यादौ न वद्र इति अनभागं हित्वा जिष इत्यस्य द्वित्वम् । अशिशिषते इति अशूङ् सन् इम् अकारं हित्वा शिष इत्यस्य द्वित्वम् । चिकरिषतीति कॄश विक्षेपे । जिगरिषतीति गॄश निगरणे दिदरिषते दृङ सादरे दिधरिषते इति धृञाङ स्थितौ । कॄङगि हिंसे गॄगि शब्दे दॄयगि विदारे दॄगि दॄमभिषि एषां स्यादृदृदुरिति वेम् चिकरिषति चिकीर्षतीत्यादि । पिपृच्छिषतीति अनेन इःम पूर्वेण जिः ॥ ८०९ ॥

भ्रस्ज औश पाके श्रिञ सेवने स्वृक शब्दोपतापयोः वेमोऽप्यस्यात्र ग्रहणं ज्ञापयति रुदुसनूनां वेमामपि सनि वेमत्वं नास्तीति । अतएव रुदुसूनीत्त्वक्या इत्यनेन एषां वेमत्वेऽपि नेसुगुहग्रह इत्यनेन इम् निषेधपक्षे रुरूषति दुदूषति सुसूषति नुनूषतीत्येव । युञ मिश्रणे ऊर्णुञाच्छादने । भर इति ग्रहणात् पूरणार्थस्य भौवादिकभृञो बिभरिषति बुभूर्षति इति धारणार्थस्य जुहोत्यादि भृञो बुभूर्षतीति । दरिद्रा

**८११। मि मी मा दा रभ लभ शक पत पद हिंसार्थराधोऽचोऽनिम् सनीस्खिलोपश्च।**

मि—राध: ६।, अच: ६।, अनिम् सनि ७।, इस् ।१।, खिलोप: १।, च ।१।।

एषामच इस् स्यात् खिलोपश्चानिमि सनि। [ २१३ ] स्यादेः सोलोपः। पित्सति। जिज्ञापयिषति।

**८१२। ज्ञपर्धापामीर्य्यः।**

ज्ञप-ऋध—आपां ६।।।, ईर्य्य: १।।।।

एषामच ई ईर् ई एते क्रमात् स्युः खिलोपश्चानिमि सनि। ज्ञीप्सति। अर्हिंधिषति ईर्त्सति। दिदम्भिषति।

---

चलु दुर्वत्याम्। यनदुञ दाने तनदुञ विस्तृतौ पतलृज पत्याञ्च ज्ञाक्ष मारणादौ। ऋध्नु वृद्धौ। दन्भू न दभे इव इति इवन्तः। यथा चिव्यु निवासे दिव्यु जिगीषादौ। षिव्यु तन्तुसन्ततौ ष्ठिव्यु निवासे स्त्रिव्यु शोषे गतौ। बिभञ्जिषतीति अनेन इसि भप्भसोरिति सस्य दत्वे स्तुश्चुभिरिति दस्य जः। अनिम् पक्षे तु स्यादेः सोलोपे भक्ष्यतीति षडि षढोः कः से। शिश्रीषतीत्यादौ घोंज्भनिङ्गमामिति दीर्घः। यियविषतीति यु सन् इसि प्रागच्कार्य्यादिति नियमादादौ द्वित्वे ततो गुणे सन्यौ च जयल्पीरिति खेरुकारस्य इः ऊर्णुनविषतीत्यादि नाजन्तादेरिति ऊकारः स्यादौ नवद्र इति रेफं हित्वा द्वित्वं ङिन्दिम् वोर्णोरिति ङित् पक्षे सुध्वोरित्युव् दिदरिद्रिषतीति उस्येचीति आकारलोपः। अनिम् पक्षे दरिद्र आलोप इत्यत्र सन्वर्जनान्नाकारलोपः। सिषासतीति खनसनजनामिति ङा, वितंसतीति अनिम्सनोऽगुणत्वेऽपि वनतनेति नलोपाभावबीजं दर्भीयावित्यत्र लेख्यम्। एके इति पाणिनीयजौमरासनीतेरनिम् सनि वा दीर्घमिच्छन्तीत्यर्थः॥ ८१०॥

अस्य व्याख्या मित्सतीत्यादि पदसाधनकाले लेख्या। पित्सतीति पतितुमिच्छतीति सन् अनिम् पक्षे अनेन खिलोपे अकारस्य इसि कृते स्यादेः सोलोपः जिज्ञापयिषतीति ज्ञाक्ष मारणादौ ञ्यन्तात् सन् भस्ज श्रीति वेस्॥ ८११॥

ज्ञपश्च ऋधश्च आप् च ते तेषाम् ईश्च ईर् च ईश्च ईर्य्यः। ज्ञीप्सतीति अनिम् पक्षे अकारस्य ईः खिलोपश्च ञेलोपः। अर्हिंधिषति ऋध्नुलृवृद्धौ भस्जश्रीति

## ८१३। दम्भो धौ।

दम्भः ६।, धौ १॥।

दम्भेरच इ ई च स्यात् अनिमि सनि खिल्लोपश्च। धिप्सति धीप्सति। अनकारनिर्द्देशात्। दिदंभिषति।

## ८१४। छ्वोः शूटावणौ जसक्वौ यङ्लुक् वोस्तु वा।

छ्वोः ६॥, शूटौ १॥, अणौ ७।, जस्—क्वौ ७।, यङ्-लुक्-वोः ७॥, तु १।, वा १।।

छकार-वकारयोः शकारोटौ स्याताम् अणौ जसे क्वौ च, यङ्लुकि वे च वा स्तः। दुद्यूषति। मित्सति दित्सति धित्सति रिप्सते लिप्सते शिक्षति पित्सते, प्रतिरित्सति। हिंसार्थः किम्? आरिरात्सति। ईप्सति।

---

सनो वेम् गुणे अर्धिय इति स्थिते अरभागं हित्वा धिय इत्यस्य द्वित्वम्। अनिम्-पक्षे ऋकारस्य ईर् खिलोपश्च झप्झसीरीति धस्य त। दिदर्भिषतीति दन्भु भसुजश्रीति सनो वेम् ॥ ८१२ ॥

धिप्सतीत्यादि दन्भु दम्भे सन् दभ इत्यनकारनिर्देशात् नलोपे अनेन खिलोपे अकारस्य इकारे च झभान्तस्येति दस्य धे झप्झसीरिति भस्य पः। अत्र गुणा-निमीत्यनेनानिम् सनोऽगुणत्वे हसुङ्गोलोप इत्यनेनैव नकारलोपे सिद्धेऽनकार-निर्देशो ज्ञापयति अनिम् सनि दन्भ एव नकारलोपो नान्यस्य इति। तेन भन्जधो मोटने विभङ्क्षति रन्जमोञ्ज रागे रिरङ्क्षतीत्यादौ न लोपः। एवं जिघांसति अधिजिगांसते तितंसतीत्येतेषामपि वनतनाद्यनिमामिति अनेन जम्लोपो न स्यादिति। तन्ह्श हिंसे इत्यस्यापि अनिम् सनि नकारलोप इति कौमराः तितृक्षति। स्वमते तु ज्ञापकसिद्धमनित्यमिति न्यायात् न लोपः। दिदंभिषतीति इवन्तत्वादिम् वा ॥ ८१३ ॥

छ च व च छ्वौ तयोः श च ऊट् च शूटौ जस् च क्विश्च जसक्वि तस्मिन्। यङ्-लुक् च व च यङ्लुग्वौ तयोः। यथा प्रच्छौ प्रश्नः विच्छश्च विश्नः। दिव्यु द्यूतम्। दुद्यूषति। क्वौ अक्षद्यूः। अणाविति पृथक्पदकरणाद्यङ्लुकि तत्सम्बन्धाभावे गुणनिमित्ते अगुणे च जसे वा स्तः। वकारे तु यङ्लुकि अन्यत्र च सर्वस्मिन्

## ८१५। मुचोऽढ़े हेर्मोच वा सनि।

मुच: ६।, अढ़े ७, हे: ६।, मोच।१।, वा।१।, सनि ७।।

अढ़स्य मुचो हे: स्थाने मोच वा स्यात् सनि। मोक्षते मुमुक्षते।

## ८१६। जयल्पो: ख्योर्य्ये।

ज-यल्-पो: ५।, ख्यो: ६।, इ।१।, ए ७।।

खिरवर्णस्य जकार-यल-पवर्गात् परे अवर्णे परे इ: स्यात् सनि। जु गतौ। जिजावयिषति। रु रिरावयिषति।

---

वकारे वा स्त इत्यर्थ:। गुणनिमित्ते यथा वेवेश्मि वेवेच्मि देद्योमि देदेमि। अगुणे यथा वेविश्म: वेविच्म: देद्यूम: देदिम:। वकारे तु वेविश्व: वेविच्व: देद्यूव: देदिव: विविश्वान् विविच्वान् दुद्यूवान् देदिवान्। मिमीमादित्यस्योदाहरति। मित्सतीत्यादि डुमिञ्न क्षेपे मीञगवधे मीकि गत्याम् एषामच: इसि क्षते खिश्च लोपे सत्यरे इति सस्य तकारे मित्सतीति मा इति स्वरूपग्रहणात् मालच माने इत्यस्यापि मित्सतीति माङलिशब्दे माङ्यच मेङ प्रतिदाने मेङ्यतु च इति चतुर्णां मित्सने इति। ङित्वादात्मनेपदं दा इति दासंज्ञा। तेन दाल लूनौ दा तु दाने डुदाञलि दोषच्छेदे एषां दित्सतीति डुधाञलि धेट धित्सतीति देङ पालने दित्सते रभौङ रिप्सते लभौङ लिप्सते। शकयङ शक्लिरू शिक्षति। अस्य स्वमते वेमत्वेऽपि वङ्गवादिनां मतेऽनिमत्वादिम् पक्षे उदाहरणं न दत्तं पतलृज गत्यां पित्सति पत्यङ ऐश्ये पद्यौङ गतौ द्वयो: पित्सते। प्रतिपूर्वराध्नो सिद्धौ हिंसार्थ:। प्रतिरित्सति। आङ्पूर्व: सेवार्थ: आरिरात्सति ईप्सति आप लृनौकि ज्ञपधांपामीर्ष्य: ॥ ८१४ ॥

ढस्याभावोऽढं तस्मिन्। मोक्षते मुमुक्षते मुनि: पापात् स्वयं मुक्तो भवितु- मिच्छतीत्यर्थ:। कर्म्मकर्तृत्वादात्मनेपदं मोक्षते इति क्वचित् केवलो हि: स्यादिति व्याख्यानात् सनं हित्वा मुचधातोर्द्वित्वे मोक्षादेशे चुङिति कुङम्। अढे किम्? वत्सं मुमुक्षति गोप: ॥ ८१५ ॥

खिरू: ख्यु: तस्य इ इति लुप्तप्रथमैकम्। ए इति सप्तम्येकम्। खिरवर्णस्य जका- रयलपवर्गात् परेऽवर्णे इ: स्यात्। अव्यवहितसनोऽसम्भवात् व्यवहिते सनीत्यर्थ:।

पू पिपावयिषति भू बिभावयिषति । जयल्पोः किं ? नुनावयिषति । अतएव ञौ ह्रिक्ते व्रिः ।

## ८१७ । श्रु स्रु स्नु द्रु प्रु प्लु च्युङां वा ।

श्रु—चुङां ६॥, वा ।१। ।

शिश्राविषति, शुश्राविषति ।

## ८१८ । व्युङोऽत्रो हसादेः सेमः क्त्वाच्च किद्वा रुदविदमुषस्तु नित्यम् ।

व्युङः ५।, अ-वः ५।, हसादेः ५।, सेमः ५।, क्त्वाच् ।१।, च ।१।, कित् ।१।, वा ।१।, रुद-विद-मुषः ५।, तु ।१।, नित्यम् १। ।

**हसादेः सेम उकारोङ इकारोङश्च वान्तवर्जात् सन् क्त्वाच्च कित् वा स्यात् रुदादेस्तु नित्यम् ।**

---

यथा जुङ् गतौ जिजावयिषति अत्र ञेः सनि आदौ ह्रित्वे पश्चात् वृद्धौ अनेन खिरुकारस्य इकारः । एवं यु यियावयिषति । रु रिरावयिषति । लु लिलावयिषति । पू पिपावयिषति । भू बिभावयिषति । मू मिमावयिषति । एवम् एषां ञेः परेऽङि आदौ ह्रित्वे पश्चात् वृद्धौ जावि इति स्थिते ञाव्रुङः स्व इति ह्रस्वे खिः सन्वद्‌घौ इत्यादिना खिः सन्वत्कार्यातिदेशेऽनेन खिरुकारस्य इकारे घौश्च खेर्हसादेर्घस्येति दीर्घे अजीजवत् इत्यादि जयल्पोः किम् ? कुङ्शब्दे चुकावयिषति । नु नुनावयिषति । सु सुषावयिषति हु जुहावयिषति इत्यादि । अतएवेत्यादि । ञौ द्वितीयचरणे वृद्धेः कर्त्तव्यत्वेऽपि ञेः परे भविष्यत् सन् विषये ह्रित्वे सति वृद्धिः स्यादित्यर्थः ॥ ८१६ ॥

पृथग्योगात् जयल्पाविति नानुवर्त्तते । श्रु श्रवणे स्रु गतौ स्नुत्व प्रस्नुत्यां द्रु गतौ प्रुङ्प्लुङ गतौ च्युङ गतौ । एषां सप्तानां खिरुवर्णस्य अव्यवहितावर्णस्यासम्भवात् वर्णद्वयव्यवहितेऽवर्णे इः स्यात् वा व्यवहिते सनीत्यर्थः । यथा शिश्रावयिषति शुश्रावयिषतीत्यादि । एवम् एषां ञेः परेऽङि आदौ ह्रित्वे पश्चात् वृद्धौ ञाव्रुङः स्व इति ह्रस्वे खिः सन्वद्‌घाविति सन्वत्कार्यातिदेशे अनेन खिरुवर्णस्य इकारे संयोगपूर्वत्वेन खेर्गुरुत्वात् दीर्घाभावे अशिश्रवत् अशुश्रवदित्यादि ॥ ८१७ ॥

उश्च इश्च वौ । तावुङौ यस्य स व्युङ् तस्मात् उकारोङ् इकारोङ् वर्ज्जवर्ज-

रुरुचिषते रुरोचिषते लिलिखिषति लिलेखिषति । रुदादेस्तु रुरुदिषति विविदिषति मुमुषिषति । वान्तः किं ? दिदेविषति ।

**८१९ । जिस्त्वोः खेः सः षः षण्यऽस्वित्स्वत्सहः ।**

जि-स्त्वोः ६॥, खेः ५।, सः १।, षः १।, षणि ७।, अ-स्विद्-स्वद्-सहः ६। ।

खेः परस्य ञ्रान्त-स्तौत्योः सस्य षत्वभूते षणि षः स्यात् न तु स्विद्स्वद्सहाम् । सुष्वापयिषति तुष्टूषति । जिस्त्वोः किं ? सिसिक्षति । षणीति किं ? तिष्ठासति । खेः किं ? प्रतीषिषति ।

इति सनन्तपादः ।

---

रान्ताभावात् नास्ति दन्त्यवकारान्तो यत्र सोऽव् तस्मात् आकाङ्क्षाभावाच्च पूर्वस्थितानामनुवृत्त्यभावे चकारेण प्रकरणोपस्थितः सन् एव आकृष्यते । यथा रुरुचिषते इत्यादि वसोऽरस्येति इमि कित् पक्षे न गुणः । एवं रुचित्वा रोचित्वा लिखित्वा लेखित्वा । रुदादेस्तु रुरुदिषति विविदिषति मुमुषिषति रुदित्वा विदित्वा मुषित्वा । अवः किं ? दिदेविषति देवित्वा ॥ ८१८ ॥

नियमोऽयम् । षभूते सनि खिनिमित्तकं मूलधातोः षत्वं ञ्रान्तस्तौत्योरेव स्यात् नान्यस्येत्यर्थः । सुष्वापयिषतीति ञुत्स्वाप्योः खेर्ञिः । क्लिलादित्यनेन सनः सस्य मूलधातोश्च षत्वम् । तुष्टूषतिस्तु सन् घीञ्झनिङ्गमामिति दीर्घे द्वित्वे क्लिलादित्युभयत्र च षत्वम् । सिसिक्षतीति षिचपर्शो ञ सन् चुचिति कुङि क्लिलादिति सनः षत्वं ञ्रान्तस्तौति भिन्नत्वात् मूलधातोर्न षत्वम् । एवं सुसुषतीत्यादि । तिष्ठासतीति सनः षत्वाभावात् नियमाभावे षत्वम् । प्रतीषिषति प्रत्येतुमिच्छतीति प्रतिपूर्वक इ गताविति भौवादिकात् सनि नाजन्तादेरिति इकारं हित्वा सन एव द्वित्वे ख्यस्येत्सनीतीत्वे सनः षत्वे मूलधातुनिमित्तकं खेः षत्वं स्यादेव । ञ्रान्तत्वात् प्राप्तौ स्विदस्वदसहां निषेधः । सिस्वेदयिषति सिसाहयिषति ॥ ८१९ ॥

इति श्रीदुर्गादासविद्यावागीशविरचितायां मुग्धबोधस्य टीकायां सनन्तपादः ।

---

**८२० । मूत्र सूत्र सूचाटशर्त्यूर्णुं हसाद्येकाचोऽशुभरुचो मुहुर्भृशार्थे यङ् ।**

मूत्र—एकाचः ५।, अशुभरुचः ५।, मुहुर्भृशार्थे ७।, यङ् ।१। ।

एभ्यः शुभरुचवर्जेभ्यो यङ् स्यात् पौनःपुन्ये अतिशये चार्थे।

**८२१ । गत्यर्थाद् गॄलुप सद चर जप जभ दन्श दहो वक्रगर्हे ।**

गत्यर्थात् ५। गॄ-दहः ५।, वक्रगर्हे ७। ।

गत्यर्थात् वक्रे, गादेर्गर्हायां यङ् स्यात् न तु पूर्वोक्ते, तद्युक्ते तु स्यात् ।

---

हसादिश्चासावेकाच्चेति हसाद्येकाच् । मूत्रश्च सूत्रश्च सूचश्च अट च अश च अर्तिश्च ऊर्णुश्च हसाद्येकाच्चेति तस्मात् । न विद्यते शुभरुचौ यत्र सोऽशुभरुच् तस्मात् । मुहुश्च भृशश्च मुहुर्भृशौ तयोरर्थः मुहुर्भृशार्थः तस्मिन् । मूत्रसूत्रसूचानामदन्तत्वेन अनेकाचत्वात् अट अश अर्त्ति ऊर्णूनामजादित्वादप्राप्तौ पृथगुक्तिः। यङ् अदन्तः तेन अटाट्यते इत्यादौ नाजन्तादेरिति आद्यचरं द्वित्वं द्वित्वम् ॥ ८२० ॥

गॄश्च लुपश्च मूर्द्धन्यादि सद च चर च जप च जभ च दन्श च दह चेति तस्मात् । लुपसाहचर्य्यात् गॄ इति तौदादिक एव ग्राह्यः । तेन पुनः पुनरतिशयेन वा गृणाति जेगीर्य्यते । वक्रञ्च गर्हा च वक्रगर्हं तस्मिन् । पृथक्पदकरणं वक्रगर्हाभ्यां यथासंख्यार्थम् । न पूर्वोक्ते मुहुर्भृशार्थयुक्ते वक्रगर्हे तु स्यादेवेति । यथा वक्रं गच्छति जंगम्यते जेगिल्यते पुनःपुनरतिशयेन वा गच्छति पुनःपुनरतिशयेन वा गिरति इत्यत्र न स्यात् । किञ्च पुनः पुनरतिशयेन वक्रं गच्छति जंगम्यते पुनःपुनरतिशयेन वा गर्हितं गिरति जेगिल्यते अत्र तु स्यादेव ॥ ८२१ ॥

## ८२२ । खेर्णुः ।

खे: ६।, णु: १।।

यङि परे खेर्णुः स्यात् ।

पुनःपुनरतिशयेन वा मूत्रयति मोमूत्र्यते, सोसूत्र्यते सोसूच्यते ।

## ८२३ । घोऽनितः ।

घ: १।, अ-नित: ६।।

अ-नकारित: खे: घ: स्यात् यङि । अटाट्यते अशाश्यते अराय्यते ऊर्णोनूयते । देदीयते मेमीयते जेगीयते जेहीयते पेपीयते सेषीयते तेष्ठीयते । शोशूयते शेश्वीयते, साखय्यते, चेक्रीयते सञ्चेक्रीयते विमेसिच्यते, यङन्तत्वात् न षः । वक्रं व्रजति वाव्रज्यते ।

---

सुगमम् । मोमूत्र्यते इति सूत्रस्य प्रस्तावे चुर्थो ञिः हसाल्लोपे सूत्रीति धातोर्यङ् ञेर्लोपे द्वित्वं खेराद्यचः परभागलोपे गुणः धातुसंज्ञायां यङो ङित्वादात्मनेपदं शपि लोपोऽतोऽदेचोरिति यङोऽकारलोपः एवं सर्वत्र ॥ ८२२ ॥

नकार इत् येषां ते नितः ( नीन् नुन् रीन् ) न विद्यन्ते नितो यस्य खेः सोऽनित् तस्य । अटाट्यत इति वक्रम् अटति पुनः पुनरतिशयेन वा वक्रम् अटति इत्यर्थे यङ् नाजन्तादेरिति अकारं हित्वा ट्य इत्यस्य द्वित्वे खेराद्यच इति यकारलोपेऽनेन दीर्घः । एव अशाश्यते अराय्यते इति ऋलिंगत्यां यङि स्याद्यर्त्तेत इति गुणे अर्य इति स्थिते स्यादौ नवद्र इत्यत्र अर्थे इत्युक्ते रेफसहितयकारस्य द्वित्वे खेराद्यच इति यलोपे घोऽनित इति दीर्घः । अनितः किं ? वनीवच्यते जंजप्यते नरीनृत्यते ऊर्णोनूयत इति यङि घोऽज्य्यरे इति दीर्घे नाजन्तादेरिति उकारं हित्वा स्यादौनवद्र इति रेफं हित्वा नूय इत्यस्य द्वित्वे आद्यचः परभागलोपे खेर्गुणे रेफसम्बन्धाभावात् मूलधातोर्नकारस्य पुनर्दन्त्यत्वम् । देदीयते इति दाञ्रूपाद् यङि आदौ दामागे इति ङी ततो द्वित्वे खेर्णुः । मेमीयत इति माङ्रूपाद् यङि दामागे इति ङी ततो द्वित्वादि । एवं जेगीयत इत्यादि पञ्च । शोशूयत

## ८२४। ग्रो र लः।

ग्रः ६।, र ।१।, लः १।।

गिरतेः रो लः स्यात् यङि। गर्हितं गिरति जेगिल्यते। लोलुप्यते सासद्यते।

## ८२५। कोश्चुर्वा।

कोः ६।, चुः १।, वा ।१।।

कोः खेश्चुः स्यात् वा यङि। चोकूयते कोकूयते।

## ८२६। नीन् वन्च स्रन्स ध्वन्स भ्रन्श कस पत पद स्कन्दाम्।

नीन् ।१।, वन्च—स्कन्दाम् ६।।।

एषां खेर्नीन् स्यात् यङि। वनीवच्यते।

---

खेर्जिर्वा यङ्ङयोरिति जिर्वा। सास्मर्यत इति स्याद्यर्त्तेत इति गुणः। चेक्रीयत इति करोतेर्यङि यङ्य्यके चर्रौ। सञ्चेस्क्रीयत इति संपरे सुमि कृत्तुव्यामिति नियमात् न गुणः। क्लिलादिति षः। विसेसिच्यते इति गिनिमित्तकं खिनिमित्तकमपि षत्वं न स्यादिति श्रीपतिदत्तः। वा व्रज्यते इति घौ।नित इति दीर्घः॥८२३॥

जेगिल्यते इति ऋदिरणावितीरि अनेन रेफस्य लः। कृतौ गिरतेरिति निर्देशात् गरणातेर्जेगीर्यते इत्येव। पर्य्यङ्कादेः रेफस्य चूडादेर्डस्य च लो वेति वक्तव्यम्। पर्य्यङ्कः पल्यङ्कः निरयः निलयः दुरयणं दुलयनं गिरति गिलति निगरणं निगलनं परिघः पलिघः परियोगः पलियोगः प्रत्ययः प्लत्ययः वारः वालः मूरं मूलं रघुः लघुः अङ्गुरिः अङ्गुलिः अरिः अलिः अरम् अलम् कपिरिका कपिलिका वपुरीकं वपुलीकं रोम लोम पांशुरं पांशुलं कर्म कलम् असुरिः असुलिः शुक्रः शुक्लः चूडा चूला वडभी वलभी जडं जलं। त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ। अयन्तु युवयोर्भेदः स जडात्मा पटुर्भवानिति दण्डी। लोलुप्यते इति गर्हितं लुम्पतीति सासद्यत इति गर्हितं सीदतीति वाक्यम्॥ ८२४॥

मण्डूकप्लुत्या खेरित्यस्यानुवृत्तिः। केचित्तु कुङ्शब्दे इत्यस्यैवायं विधिरित्याहुः॥ ८२५॥

## ८२७। जम जप जभ दह दन्श भन्ज पश शपोऽतो नुन् लवयस्तु वा ।

जम—शप: ६।, अत: ६।, नुन् ।१।, ल-व-य: ६।, तु: ।१।, वा ।१।।

जमन्तानां जपादीनां च अदन्तस्य खेर्नुन् स्यात् यङि, लवयान्तस्य तु वा। जञ्जन्यते जाजायते।

## ८२८। हनो वा घ्नी।

हन: ६।, वा ।१।, घ्नी ।१।।

जेघ्नीयते जङ्घन्यते। जञ्जप्यते। चञ्चल्यते चाचल्यते, मम्मव्यते मामव्यते, दन्दय्यते दादय्यते।

---

वन्चु गत्यां स्रन्सु ल्टङ भ्रंशे ध्वन्सु ल्टङ गतौ भ्रंशे भ्रन्शु यङ् अध:पाते ताल-व्यान्त:। कस ज गतौ पतल्ज गत्यां पद स्थैर्य्ये पद्यौ ङगतौ इति द्वयम्। स्कान्दिरौ शोषणे कसज गतावित्यस्य साहचर्य्यात् पतल्ज गत्यामित्यस्यैव ग्रहणम्। तेन पत्य-ङैश्र्ये इत्यस्य पापत्यत इत्येव अतएव यङन्तचलपतसहवहः कीत्यस्य पापतिरिति स्वयमुदाहरिष्यति। वनीवच्यते इति हसुङ्न इति न लोप: एवं सनीस्रस्यते दनी-ध्वस्यते वनीभ्रश्यते चनीकस्यते पनीपद्यते चनीस्कान्यते ॥ ८२६ ॥

जमश्च जपश्च जभश्च दहश्च दन्शश्च भन्जश्च पशश्च शप चेति तस्य। नुरित्यनु-स्वार:। अन्यथा यंयम्यते रंरम्यते इत्यादावनुस्वारो न स्यात् निरवादन्ते। जंज-न्यते इति वात्वरयपे इत्यनेनानुस्वारस्य यम् वा पक्षेऽनुस्वारस्थिति:। एवं सर्वत्र। पक्षे जाजायत इति खनसन जनामिति ङादेशे द्वित्वे घोंऽनित इति दीर्घ:। एव कणृ आर्त्तस्वरे चंकण्यते शमुभिर्य शमे शंशम्यते। अदन्तस्य खेरिति किं तिम्य क्लेदने तेतिम्यते। गर्हितं जपति जंजप्यते एवं जंजभ्यते दंदह्यते दंदश्यते पुन: पुनरतिशयेन वा भनक्ति बंभज्यते एवं पंपश्यते शंशप्यते जंघन्यते इति खेर्हाघ इति इति हस्य घ: ॥ ८२७ ॥

हनधातुर्घ्नी स्याद्वा यङि। जेघ्नीयते चंचल्यते इत्यादि चलजगतौ मव बन्धने ङिदयङ एषां खेर्नुन् वा। लययोरन्त: पाठात् वकारोऽत्र दन्त्य:। तेन कर्व गतौ इत्यस्य चाकर्व्यत इत्येव ॥ ८२८ ॥

## ८२९। चरफलोरुच्चोङ्गो न णुः।

चर-फलोः ६॥, उत् ।१।, च ।१।, उङ्‌: ६।, न ।१।, णुः १।।

चरफलोः खेर्नुन् स्यात् उङ उकारस्य यङि, तस्य च न णुः। चञ्चूर्य्यते पम्फुल्यते।

## ८३०। रीन्नृत्वतः।

रीन् ।१।, ऋत्वतः ६।।

ऋकारवतो धोः खेरीन् स्यात् यङि। नरीनृत्यते।

## ८३१। व्ये-स्वप-स्यमो जिः।

व्ये-स्वप-स्यमः ६।, जिः १।।

एषां जिः स्यात् यङि। वेवीयते सोषुप्यते सेसिम्यते।

## ८३२। न वशः।

न ।१।, वशः ६।।

वष्टेर्जिर्न स्यात् यङि। वावश्यते।

## ८३३। चायः कीः।

चायः ६।, की ।१।।

चायतेः की स्यात् यङि। चेकीयते।

---

खेरित्यनुवर्त्तते। यङ् लुकि चंचूर्त्ति पंफुलति इत्यादौ प्रसक्तस्य गुणस्य निषेधार्थं न णुरिति वचनम्। चंचूर्य्यत इति र्व्यनच्तयीति दीर्घः॥ ८२९॥

ऋत् अस्त्यत्र ऋत्वान् तस्य ऋत्वतः। ऋकारान्तस्य तु यङ् ह्यक्ये चेत्यनेन ऋकारस्य रीभावे नतौ द्वित्वे खेरीन्न स्यात्। यङ्लुकि तु चरीकर्त्तीत्यादौ स्यादेव। नरीनृत्यते इत्यादौ णत्वाभावः प्रागुक्तः। जरीगृह्यते परीपृच्छ्यते वरीवृश्च्यते वरीभृज्ज्यते एषु ग्रहस्वपाद्योरिति जौ कृते ऋकारवत्त्वात् खेरीन्॥ ८३०॥

ग्रहस्वपाद्योरिति सूत्रे स्वपादेः किति जिरिति नियमादप्राप्तौ विधिरयम् इष्टतो ह्यधिकाराणां प्रवृत्तिनिवृत्ती स्यातामिति खेरित्यस्यानुवृत्तिर्नास्ति। व्येञ्जि कृते जि स्वपौ चलुषये स्यमुध्वनेन एषां जिः स्याद् यङि॥ ८३१॥

ग्रहादित्वात् प्राप्तौ निषेधः॥ ८३२॥

## ८३४ । आ-धोर्ङी ।

आ धोः ६॥, ङी ।१। ।

जेघ्रीयते देध्मीयते ।

## ८३५ । शीङो ङ्य्येऽणौ ।

शीङः ६।, ङय् ।१।, ये ७, अणौ ७। ।

शाशय्यते ।

## ८३६ । यङो लुक् वापो लुक् पं द्विखादि च धूलान्तु वाऽनि तु नित्यं नोतः ।

यङः ६।, लुक् ।१।, वा ।१।, अपः ६।, लुक् ।१।, पं १।, द्विः १।, खादि ।१।, च ।१।, धुलं १।, तु ।१।, वा ।१।, अनि ७, तु ।१।, नित्यं १।, न ।१।, उतः ५। ।

यङो लुक् स्यात् वा, लुकि सति अपो लुक् पं द्वित्वं खेर्णु-रित्यादि कार्य्यञ्च स्यात्, धुग्रहणोक्तान्तु वा स्यात्, अनि तु नित्यं लुक् स्यात् उदन्तात्त्वनि न स्यात् ।

---

सुगमम् ॥ ८३३ ॥

ई इति लुप्तप्रथमैकम् । रामानन्दरामतर्कवागीशौ तु आधोर्ङीति पाठं कल्पयतः । वस्तुतस्तु, आधोरी इत्येव पाठः । अज्माचादेशे येन विधिस्तदन्तस्येति न्यायादन्त्यस्य स्थाने इत्यर्थः । अथवा आश्च आश्च औ आध्मौरी आध्मौ तयोर्घ्राध्मोरिति समासः ॥ ८३४ ॥

शाशय्यते इति यङि क्ते द्विः । एवं यकि शय्यते यपि संशय्य क्यपि शय्या । अणौ किं ? शेयम् ॥ ८३५ ॥

यङ्लुक् करणात् त्यलोपे त्यलक्षणमिति न्यायेन प्राप्तव्यकार्य्यस्य लुकि न तवेति निषेधात् यङ् अकोचद्रींति स्याद्यर्त्तौ ती णरित्यादि हसुङ्नीलोप इत्यादीनि न स्युः । तदन्तत्वेन विहितं कार्य्यं स्यादेव । तेन धातुसंज्ञा व्यासाम् च स्यात् । ततश्च यङन्तत्वेनैव द्वित्वे सिद्धे द्विरित्युपादानं ज्ञापयति यङो लुक्यपि तस्मिन् परे विहितं किमपि कार्य्यं स्यादिति । तेन यङ्लुकि यङादेर्जिः स्यात् । यहजरीगर्द्धिज्या जेजेति व्यध वेवेद्धीत्यादि । खादीनां यङि परे

बोभवीति बोभोति, बोभूतः बोभुवति। अबोभवीत् अबोभोत् अबोभूताम् अबोभुवन् अबोभूत् अबोभुवीत् बोभुवाञ्चकार।

वनीवञ्चीति वनीवङ्क्ति, वनीवक्तः, वनीवचति। जङ्गमीति जङ्गन्ति, जङ्गतः, जङ्ग्मति, जङ्गमति। जङ्गमीमि जङ्गन्मि जङ्गन्वः जङ्गन्मः। जङ्घनीति जङ्घन्ति, जङ्घतः, जङ्घ्नति जङ्घनति। चञ्चुरीति चञ्चूर्त्ति। चाखातः चङ्खन्तः चङ्ख्नति चङ्खनति। जञ्जनीति जञ्जन्ति जाजातः जञ्जन्तः जंज्ञति जञ्जनति। देदिवीति देदेति देद्योति, देद्यूतः देदितः देद्यूवः देदिवः। वेविच्छीति वेवेष्टि, वेविश्वः वेविच्छुः।

---

विहितानां लुकि न तलेति निषेधादप्राप्तौ वचनम्। अनि तु इति पचादित्वात् क्तेऽनि परे नित्यं लुक् स्यात्। यथा नेनीयते नेन्यः लोलूयते लोलुवः। नोत इति क्त्सोदन्तात्तु पचादित्वादनि परे लुक् न स्यात्। यथा रोरूयते रोरुयः। बोभवीतीति मूलधातोर्जातमात्रस्य यङो लुकि द्विर्भावे खेर्गुणे बोभू इत्यस्य धातुसञ्ज्ञायां तिपि जातस्य शपो लुकि पिद्वस्येति ईमि गुणः। ईमोऽभावपक्षे गुण एव। बोभूत इति तसो ङित्त्वात् न गुणः। बोभुवतीति अन्तोऽद्द्वे भुध्वोरित्युव्। अबोभवीदित्यादि द्या दीप् ईम् वा। अबोभुवन्निति अनुसिद्वेरित्यत्र भूवर्जनात् न उस्। बोभूवाञ्चकार इति यङ्लुक्य लोपे इति व भाणात् गुणनिषेधे भ्रुध्वोरित्युव्। वनीवञ्चीतीत्यादि नीन् वन्चेत्यादिना खेर्नीन् पिद्वस्येति ईम्। ईमोऽभावपक्षे चुङिति कुङ् नस्यानुस्वारे तस्य ङः। वनीवक्त इति हसुङ्नो लोप इति नलोपः। जङ्गमीति इत्यादि जमजपजभेत्यादिना खेर्नुन्। ईमोऽभावपक्षे मस्यानुस्वारे तस्य नः। जङ्गत इति वनतनाद्यनिमामिति मलोपः। जंग्मतीत्यादि धूक्तत्वात् हनगमित्युङ् लोपो वा। जंगन्मीत्यादि धोर्मोनः फम् वि इति मस्य नः। जंघन्तीत्यादि खेर्होघोऽञ्णिति चेति हस्य घः पक्षे ईम्। जंघत इति वनतनेति न लोपः। जंघ्नतीत्यादि हनगमित्युङ् लोपो वा अन्तोऽद्द्वेः। चंचुरीति इत्यादि चरफलोरिति खेर्नुन् उङ उकारे तेनैव गुणनिषेधे पक्षे ईमोऽभावः। चाखात इत्यादि धूक्तत्वात् खनसनजनामिति ङादेशे जमन्तत्वाभावात् खेर्न नुन् धोऽनित इत्येव। पक्षे जमन्तत्वात् खेर्नुन्। आगमादेशयोरागमो विधिर्बलवानिति न्यायादादौ पिद्वस्येति ईमि खनसनजनामिति ङादेशाभावे चंखनीति

## ८३७। हाकः खेर्न घंः।

हाकः ६।, खेः ६।, न ।१।, घं; १।-।

जहाति जहेति।

## ८३८। दन्शो नलोपो वा।

दन्शः ६।, नलोपः १।, वा ।१।।

दन्दष्टि दन्दंष्टि दन्दशीति दन्दंशीति।

## ८३९। जिर्न वा।

जिः १।, न ।१।, वा ।१।।

सास्वपीति सास्वप्ति सोषोप्ति सोषुपीति।

---

चंखनीषि चंखनीमि इति बोध्यम्। पचे चंखन्ति चंखंसीत्यादौ तु खनसनजनानित्यत्र वाशब्दस्य व्यवस्थावाचितया पिति झसि ङा न स्यादिति तत्रैव व्याख्यातम्। चंखनतीत्यादि अन्तोऽद् वेः हनगमित्युङ्लोपी वा। जाजात इत्यादि खनसनेति ङा वा जंघ्नतीत्यादि अन्तोऽद् वेः हनगमित्युङ्लोपी वा। देवीतीत्यादि आदौ द्वित्वे तिबाद्युत्पत्तौ क्वीःशुटाविति ऊट्। खेर्णुः ऊटौ गुणः ऊटोऽप्राप्तिपदे य्वोर्लोप इति वलोपः गुणश्च। पचे ईमि नहुग्रङ्नोऽचीति गुणनिषेधः। देद्यूतः इत्यादि सुगमम्। वेविच्छीति इत्यादि छोऽच इति द्वित्वे झप्झसोरिति छस्य चः पचे क्वीः शुटाविति छस्य शे शक्राञ्जेति षङ्॥ ८३६॥

घोऽनित इति प्राप्ते दीर्घस्य निषेधः। जहेति इति ईम् सन्धिः॥ ८३७॥

दन्शो नलोपः स्याद्वा यङ्लुकि। अनीम् पचे दंदष्टि दंदंष्टि। ईमि तु दंदशीति दंदंशीति॥ ८३८॥

केवलयङ्निमित्तको व्यंखपस्यमो जिः स यङ्लुकि पचे निषिध्यते। सकलङिन्निमित्तको ग्रहादेर्यो जिः स तु यङो लुग्वेत्यत्र विरिति ज्ञापकात् नित्य एव स्यात्। सोषोप्तीति जौ कृते द्विले षत्वम्। एवं सास्वपीति सोषुपीति व्येञ् वेवेति वाव्याति स्यमु सेसेन्ति सास्यन्ति॥ ८३९॥

## ८४०। रीनो रिन्रनौ वा।

रीनः ६।, रिन्-रनौ १॥, वा ।१।।

रीनः स्थाने रिन्रनौ वा स्तो यङ्लुकि।

चरिकरीति चर्करीति चरीकरीति चरिकर्त्ति चर्कर्त्ति चरीकर्त्ति।

## ८४१। यङ्-लुक्-क्यलोपेऽरे न गु-व्री।

यङ्-लुक्-क्यलोपे ७।, अरे ७।, न ।१।, गुः-व्री १॥।

बेभिदिता मर्मृजिता। अरे किं? बेभेत्ति मर्मार्ष्टि।

इति यङन्त पादः।

---

## चतुर्थः पादः—लिधुः।

## ८४२। लेः काम्यक् स्वेच्छायाम्।

लेः ५।, काम्यक् ।१।, स्वेच्छायाम् ७।।

लेः परः काम्यक् स्यात् आत्मेच्छायाम्। आत्मनः पुत्रमिच्छति पुत्रकाम्यति।

---

रीनः स्थाने रीन उत्पत्तिस्थले। तेन ऋकारवती धोः खिरन्ते रिनरनौ वा स्त इत्यर्थः। अन्यथा नित्त्वात् रीनीऽन्ते रिनरन् प्रसक्तिः स्यात्। इम् पक्षे रिनि चरिकरीति रनि चर्करीति। अनिम् पक्षे रिनि चरिकर्त्ति रीनि चरीकर्त्ति। एवं वृत वरिवर्त्ति वृधू वरिवर्द्धीत्यादि॥ ८४०॥

यङो लुकि क्यस्य लोपे च गुव्री न स्यातामिव। पुनः पुनरतिशयेन वा भित्ता बेभिदिता अत्र न गुणः। पुनः पुनरतिशयेन वा मार्जिता मर्मृजिता अत्र मृजोऽक्ङिति इति न वृद्धिः। क्यलोपे तु समिधिता समिधक इत्यादौ न गुणः। दृषदक इत्यादौ न वृद्धिः। जौमरास्तु यङ्लुगन्तानां णौ परे वृद्धिविकल्पं कृत्वा नेनाययति नेन्ययति बोभावयति बोभुवयति पापाचयति पापचयति इत्युदाहरन्ति॥८४१॥

इति यङन्तपादः।

---

मुक्तिमिच्छति मुक्तिकाम्यति इत्यादौ कित्त्वान्न गुणः। अन्यस्य अयुतत्वादेव स्वस्य इच्छायाः प्राप्तौ स्वग्रहणं ज्ञापयति। कर्त्तुरिच्छायाः कर्म पुत्रादिर्यदि आत्म-

च। प्रलम्भः। अन्यत्र दुर्लाभः। एकेति किम्?, अतिदुर्लम्भः।

**१२३८। स्यदैधावोद हिमश्रथ प्रश्रथ स्फार-स्फाल राग काय निकायाकायाः।**

स्यद—कायाः १॥।

एते घञन्ता निपात्यन्ते। स्यदो वेगः। एधः इध्मम् अवोदः अवक्लेदः। हिमश्रथः हिमश्रन्थनम्। प्रश्रथः प्रश्रथ-न्थनं स्फारः स्फोरणम्। स्फालः स्फोलनम्। रज्यतेऽनेनेति रागः। कायो देहः। निकायो निवासः। आकायश्चितिः।

**११३९। खनो ड-डरे केकवकाः।**

खनः ५।, ड-डर-इक-इकवकाः १॥।

आखः आखरः आखनिकः आखनिकवकः।

---

एकौ अद्वितीयौ च तौ दुःसू चेति एकदुःसू न विद्येते तौ यत्र सोऽनेकदुःसूः तस्मात्। यथा खलि अतिदुर्लम्भः अतिसुलम्भः घञि प्रलम्भः। नुण् रध इत्यनेनैवेष्टसिद्धौ एतद्विधानं नियमार्थम्। तेन खलि दुर्लभः सुलभः। घञि लाभः दुर्लाभः सुलाभः। एषु पूर्वेणापि नुण् न स्यात्॥ ११३७॥

स्यन्दङ्वद्ध स्रुतौ स्यदो वेगः अन्यत्र स्यन्दः। इन्धीञिधङ द्युतौ। एधः काष्ठम् अन्यत्र इन्धः। अवपूर्व उन्दधौ क्लेदे अवोदः अवक्लेदः। अवादन्यत्र इन्दः प्रोन्दः। श्रन्थग मोचे। हिमस्य श्रन्थनं हिमश्रथः। प्रश्रन्थनं प्रश्रथः। अन्यत्र श्रन्थः परिश्रन्थः। स्फुरभ्रि स्फूर्त्तौ अग्रन्तस्य स्फारः। क्री जी ङ इत्यनेन उकारस्याकारेणैवेष्टसिद्धौ निपातनं पचे स्फोर इत्यनिष्टपदनिरासार्थम्। स्फुल भ्रि स्फूर्त्तौ। अग्रन्तस्य स्फालः। स्फल श चाले इत्यनेनैवेष्टसिद्धौ निपातनं स्फोल इत्यनिष्टनिवारणार्थम्। रन्जञ रागे भावे करणे वा घञि रागः अन्यत्र रङ्गः। चिन चिञि चित्यां कायो देहः। अन्यत्र चायः। एवं निकायो निवासः। अन्यत्र निचायः। आकायश्चितिः अत्र ककार एव निपातफलम्॥ ११३८॥

डस्य डरस्य इकस्य इकवकस्य ते॥ ११३९॥

## ११४०। व्याप्तौ भावे णिनः।

व्याप्तौ ७, भावे ७, णिनः १।।

धोर्भावे णिनः स्यात् व्याप्तौ सत्याम्। णिनान्तात् स्वार्थे णः। सांराविणं वर्त्तते।

## ११४१। व्यतीहारे णन् स्त्री।

व्यतीहारे ७, णन् ।१।, स्त्री ।१।।

धोर्भावे णन् स्यात् व्यतीहारे, णनन्तात् स्वार्थे णः, तदन्तञ्च स्त्रियाम्। व्यावहारी।

## ११४२। ट्वितोऽथुर्भावे।

ट्वितः ५।, अथुः १।, भावे ७।।

टुकारितो धोरथुः स्यात् भावे। वेपथुः।

## ११४३। ड्वितस्तज्जे त्रिमक्।

ड्वितः ५।, तज्जे ७, त्रिमक् ।१।।

डुकारितस्त्रिमक् स्यात् धर्थान्निष्पन्ने। करणाज्जातं कृत्रिमम्।

---

सम्पूर्वरुत ध्वनौ भावे णिने णित्त्वात् वृद्धौ संराविणः इति स्थिते स्वार्थे णे णित्त्वे त्रिरादेश्च इति वृद्धौ ययोर्लोप इत्यकारलोपे सांराविणं हट्टस्य। सम्यक् शब्दो व्याप्त इत्यर्थः॥ ११४०॥

णनः प्रथमणकारो वृद्ध्यर्थः। शेषो दन्त्यः नकारस्तु य्वोर्युमदान्ते इत्यत्र दुनीभूज्वलाद्येति विहितस्य णप्रत्ययस्य अप्राप्तये विशेषणार्थः। व्यवपूर्वहृञ हृत्यामनेन णनि वृद्धौ व्यवहार इति स्थिते स्वार्थे णे य्वोर्युम इत्यत्र णनन्तवर्जनात् यकारस्य इमोऽप्राप्तौ णित्त्वे त्रिरिति वृद्धौ ययोर्लोप इत्यकारलोपे षित्त्वादीपि व्यवहारी। अन्योन्यव्यवहरणमित्यर्थः। एवम् अन्योन्यव्याक्रोशनं व्याक्रोशीत्यादि॥ ११४१॥

टुरित् यस्य स ट्वित् तस्मात् पृथग्योगात् व्यतीहारस्य स्त्री इत्यस्य च नानुवृत्तिः। टुडुवेपृ चले। वेपनं वेपथुः। एवं याचथुरित्यादि॥ ११४२॥

डुरित् यस्य स डित् तस्मात्। तस्मात् धात्वर्थात् जातमिति हनजनात् इति

**११४४ । स्वप रच्च यत प्रच्छ विच्छ याच यजो नङ् भावे न जिः ।**

स्वप—यजः ५।, नङ् ।१।, भावे ७, न ।१।, जिः १। ।

एभ्यो नङ् स्यात् भावे, न च जिः । स्वप्नः रक्ष्णः यत्नः प्रश्नः विश्नः याच्ञा यज्ञः ।

**११४५ । क्रिर्दोऽन्तर्गेः ।**

क्रिः १।, दः ५।, अन्तर्-गेः ५। ।

अन्तरो गेश्च परात् दा-संज्ञकात् क्रिः स्यात् भावे । अन्तर्द्धिः आदिः ।

**११४६ । ढाड्डे ।**

ढात् ५।, डे ७। ।

ढात् परात् दः क्रिः स्यात् डे । वारिधिः पयोनिधिः ।

**११४७ । क्तिः स्त्र्यघे ।**

क्तिः १।, स्त्री ।१।, अघे ७। ।

धोः क्तिः स्यात् न तु घे, तदन्तश्च स्त्रियाम् ।

---

डप्रत्यये तज्ज तस्मिन् । डुक्रञ चिमकि क्रित्वात् गुणाभावे क्रत्रिमम् । एवं डुधाञ द्वित्रिमम् । एवं डुदाञ दत्रिममित्यादि ॥ ११४३ ॥

स्वप्नौ वु, जि भये, स्वप्नः । जि रक्ष पालने रक्ष्णः । यतीङ यत्ने यत्नः । प्रच्छी श ज्ञीप्से प्रश्नः अत्र न जिरिति निषेधात् ग्रहस्वपाद्योरिति जिर्न स्यात् । क्वौः शटाविति छस्य शः । विच्छश गतौ विश्नः छस्य शः । टुडु याचृञ याचने नङि स्तुश्चुभिरिति नस्य ञकारे अभिधानात् स्त्रीत्वे आपि याच्ञा यजे ञौ यज्ञः । रक्ष यत विच्छ याच एभ्यो ह्वचतेरिति ञम् निषेधः ॥ ११४४ ॥

अन्तर्द्धानम् अन्तर्द्धिः क्रित्वात् गुणे उसेचीति आलोपः । आदिरिति । आङ्पूर्वाणां दा तु दाने इत्यादि दारूपाणां क्रौ आदिः ॥ ११४५ ॥

डु धा ञलि धारणे । वारि धीयतेऽस्मिन् इति वारिधिः । एवं पयो निधीयते पयोनिधिः ॥ ११४६ ॥

क्वतिः बुद्धिः मतिः स्मृतिः प्रकृतिः।

[१०८२] ह्लादेः ह्वः क्तौ च। प्रह्लत्तिः भूतिः फुल्तिः।

## ११४८। कॄ गॄ ज्या ग्ला हा ल्वादेर्निः।

कॄ—ल्वादेः ५।, निः १।।

**एभ्यः परस्याः क्तेः निः स्यात्। कीर्णिः गीर्णिः ज्यानिः ग्लानिः हानिः लूनिः पूर्णिः।**

---

यस्य वर्जनात् कर्त्तृभिन्नकारकेषु भावे च स्यादित्यर्थः। डु क्ल ञ क्रियते असाविति कर्म्मणि करणमिति भावे च क्वतिः। बुध्यौ ङ वेदने। बुध्यतेऽनया बोधनमिति वा बुद्धिः। अत्र ढभात्तथोरिति तस्य धे भ्रप्भसोरिति धस्य दः। स्मरणं स्मृतिः। ह्लादीङ मोदने क्तौ ह्वयतेरिति इमो निषेधे ह्लादः ह्व इति ह्रस्वे भ्रप्भसोरिति दस्य ते प्रह्लत्तिः। भूयतेऽनया इति भूतिः सम्पत्तिः भवनमिति वा भूतिः। अत्र वृदुश्रीति इम् निषेधः। ञिफला भिदि ह्वयतेरिति इम् निषेधे चरफलो दुरित्यकारस्य उकारे फुल्तिः॥ ११४७॥

कॄश्च गॄश्च ज्याश्च ग्लाश्च हाश्च लूश्च ते, ते आदयो यस्य स तस्मात्। क्र्यादिस्तु प्वादिभिन्नदीर्घऋदन्ताः। यथा कॄश विक्षेपे, गॄश निगरणे, जॄ इर्षस्य च, भॄष्य च, तॄतरे, दॄभये दॄयगि विदारे, नॄस नीतौ, पॄलि पालने। दर्शते। चुरादेर्नित्य-ञन्तत्वात् ऋदन्तत्वं नास्तीति। कीर्णिरिति। अनेन क्तेः स्थाने नौ क्वते स्थानि-वत्त्वात् नेः कित्त्वे वृदुश्रीति इमो निषेधे ऋदिरणाविति इरि व्यंनचतयोति दीर्घः। एवं गीर्णिरित्यादि। ज्या इत्यस्य ल्वादित्वादेव प्राप्तौ पृथग्ग्रहणं ज्ञापयति। ज्यादेः परस्य नि आदेशस्य स्थानिवत्त्वं नास्तीति। तेनास्य कित्त्वाभावात् ज्यानिरित्यत्र न जिः। एवं संज्ञाविशेषे ज्यादित्वात् क्तेर्नि आदेशे श्रोणिर्नितम्बः श्रेणिः पङ्क्तिरित्यादौ गुणः। ग्लादिस्तु ग्लै क्लमे ग्लानिः एवं म्लै म्लानिः। हादिस्तु ओहालि त्यागे हानिः। अत्र दा मा गै इत्यत्र गौरवज्ञापकात् नङीः। हादेः पृथग्विधानं ज्ञापयति क्तिः। स्यघे इत्यत्र अघ इति नञोऽल्पार्थत्वात् वहप्रभृते-र्नाम्नि कर्त्तरि क्तौ तस्य नि आदेशे स्थानिवत्त्वाभावात् जेरभावे वहतीति वह्निः एवं अग्निः। नाम्नि किम्? ऊढ़िः। ल्वादिस्तु लूञगि छिदि लनिः अत्र वृदुश्रीति

## ११४९। साति हेति यूति जूति।

स्यति हिनोति यौति जवतीनाम् एते क्यन्ता निपात्यन्ते।

## ११५०। शी व्रज यज विद स्वास मन चर भटाट्येन समज निपत निसद: क्यप्।

शी—निसद: ५।, क्यप् ।१।।

**एभ्यो भावे क्यप् स्यात् तदन्तश्च स्त्रियाम्। शय्या व्रज्या इज्या विद्या सुत्या आस्या मन्या चर्य्या भृत्या अटाट्या इत्या समज्या निपत्या निषद्या।**

---

इसी निषेध:। जि पृ गिलि तु पालने वृदुश्नीति इसी निषेधे स्वदिरणाविति जरि व्यंनचयतीति दीर्घे पूर्णि:। पूर्त्तिरिति तु पूरीषङ् पूर्त्तौ इत्यस्य। जौमरास्ति ज्वरत्वरचरज्ञक्षौ, धुर्वीतुर्वीत्येतान् वर्जयित्वा रेफान्तादपि क्तेर्निरित्याङ्ग:। तन्मते ईर लङ कम्पगत्योरित्यादेरपि ईर्णिरित्यादि॥ ११४८॥

सीय नाशे निपातनात् दो सो मा स्थामिति ङिन्नं स्यात्। हिनोतेर्गुण: युल मिश्रणे जुरंहसि इत्येतयोर्दीर्घ:॥ ११४९॥

अत्र सूत्रे भावे इति नीक्ता वृत्तौ भावे इति व्याख्यानादत्र प्रयोगानुसारेण भावे कर्तृभिन्नकारके च स्यात्। परसूत्रेषु तु भावस्यैवानुवृत्ति: कदादित् कारकस्येति ज्ञापनार्थम्। यथा शीञ्लिञ्जि स्वप्ने शेतेऽस्यामिति क्यपि शीङीङय्ये णाविति ङयि स्त्रीत्वादापि शय्या खट्वादि:। व्रज गतौ व्रजनं व्रज्या। यजै ञौ यजनं इज्या ग्रहस्वपाद्योरिति जि:। विदल मतौ विदन्त्यनया इति विद्या सवनं सुत्या क्यपि कित्वात् गुणाभावे स्वस्य तन्। ञिासङ आसनं आस्या। मन यौङ बोधे। मन्यतेऽस्यामिति। चर्गमनेऽदने आचारे चरणं चर्य्या। भृ लिट्ञौ रणं भृत्या। अट गतौ यङि अटाट्यभागात् भावे क्यपि हसाल्लोप इत्यकारलोपे सैनैव यकारलोपे अटाट्या। इन गतौ एत्यनया अयनं वा इत्या। अज क्षेपे तौ समजन्त्यस्यामिति समज्या सभा। अत्र व्यजीऽरे वेत्यत्र क्यप्वर्जनात् न वी। पतल्ज गत्यां निपतन्त्यस्यामिति निपत्या युद्धभूमि:। सदल्जौश विषादादौ। निषीदन्त्यस्यामिति निषद्या क्रयविक्रयभूमि:॥ ११५०॥

## ११५१। कुः शश्च।

कुः ५।, शः १।, च।१।।

करोतेः शः स्यात् क्यप् च भावे स च स्त्रियाम्। क्रिया, कृत्या।

## ११५२। सृ-जागुर्यः।

सृ-जागुः ५।, यः १।।

आभ्यां यः स्यात् भावे, स च स्त्रियाम्। परिसर्य्या जागर्य्या।

## ११५३। शंस्त्यादः।

शंस्-त्यात् ५।, अः १।।

आभ्यामः स्यात् भावे स च स्त्रियाम्। प्रशंसा दिदृक्षा टाटा कण्डूया।

## ११५४। सेमक्तात् सरोः।

सेमक्तात् ५।, सरोः ५।।

यस्मात् क्तो विहितः सेम् स सेमक्तः, तस्मात् हमतो धोः

---

डुकृञ भावे शप्रत्यये रतनोर्यगिणाविति षकि ऋद्रिः शयगिति ऋकारस्य रिकारे क्रिया। क्यपि तु गुणाभावे स्वस्येति तनि कृत्या। अत्र चकारेण क्तेरपि समुच्चयात् कृतिरपि। एवं चकारात् मृगयतेरपि शप्रत्यये मृगया॥ ११५१॥

परिसरणं परिसर्य्या, परिपूर्वस्यैव प्रयोगः। जागरणं जागर्य्या॥ ११५२॥

शनस च त्यश्चेति शंस्यं तस्मात्। शनसु हिंसास्तुत्योः। प्रशंसनं प्रशंसा। त्यः प्रत्ययान्तः। दृश्ँ प्रौ प्रेच्छे सनि शक्राजेति षङि षढोः कः सी इति षस्य ककारे दिदृक्षभागादनेन भावे अप्रत्यये लोपीऽत इति सनोऽकारलोपे स्त्रीत्वादापि दिदृक्षा। एवं स्वार्थे सनन्तादपि चिकित्सा इत्यादि। अट गतौ यङि अटाट्य-भागादप्रत्यये हसाल्लोप इत्यकारलोपे पुनस्तस्यैव यकारलोपेऽपि अटाटा। कण्डू-शब्दात् क्ये कृते कण्डूयभागादप्रत्यये कण्डूया। एवं पुत्रकाम्या ज्ञानीया इत्यादि। कम ऋतेति ईयादौ ऋतीया गोपाया॥ ११५३॥

सह इमा वर्त्तते यः स सेम्। सेम् क्तो यस्मात् स सेमक्तः तस्मात्। यस्मात् धातोः परस्य क्तस्य इम् सम्भवति स सेमक्तः। सेमक्तात् गुर्व्वक्षरवतो धातो रः

अः स्यात् भावे स च स्त्रियाम्। ईहा जागरा। सेमक्तात् किम् ?, नीतिः राद्धिः। रुमतः किम् ?, पत्तिः।

११५५। तुलेच्छारा तारा धारा कारा हारा गोधा लेखा रेखा चूड़ाः।

तुला—चूड़ाः १॥।

एते आन्ता निपात्यन्ते। चोदना चूड़ा।

११५६। भीषि चिन्ति पूजि कथि कुम्बि चर्च्चि स्पृहि तोलि दोलि षिङ्गिदाद्यात्वर्घटादेर्ङः।

भीषि—आत्वर्-घटादेः ५।, ङः १।

एभ्यो भावे ङः स्यात् स च स्त्रियाम्। भीषा चिन्ता पूजा

---

स्यादित्यर्थः। ईहङ चेष्टे ईहा जागृचस्तु जागरे। सेमक्तात् किं नीञ प्रापणे नीतिः। राध्यौ सिद्धौ राद्धिः। रुमतः किं पट गतौ पट्टिः॥ ११५४॥

तुल कि उन्मितौ। तोलयत्यनयेति तुला परिमाणदण्डः। इषुश वाञ्छे इच्छा। ऋ गतौ आरा छुरिका। तॄतरे तारा। धृञ धारा। गुध्य वेष्टे गोधा। हृञ हारा। कृञ कारा। लिखश लेखा। लकारस्य रेफे रेखा च। चुदकनुदि चूड़ा। चूड़ा इति बहुवचनादन्येऽपि निपात्यन्ते। यथा भिदादेर्भावे णकः स्त्री। भेदनं भेदिका। अतएव चिकीर्षा यस्य भेदिकेति स्वयमुक्तम्। एवं विशेषेण भीषणा विभीषिका। रोगाख्यायाम्। प्रवाहिका प्रच्छर्दिका विचर्च्चिका। संज्ञायाम् उद्यानपुष्पाणि भज्यन्तेऽस्यामिति उद्यानपुष्पभञ्जिका क्रीड़ा। ऋणार्ह-पर्य्यायेषु च ऋणे पायसभोजिकां मे धारयसि। अर्हे इक्षुभक्षिकां भवान् अर्हति। पर्य्याये अद्य तव शायिका। एवम् आसिका आसनमित्यर्थः। एवञ्च समादेः पद्यतेर्भावे क्विप् स्त्रियाम्। पद्यौङ गतौ सम्पत् आपत् विपत् प्रतिपत्। एवं टुक्षुण क्षुते। क्षवणं क्षुत्। प्रतिश्रुत् प्रतिध्वनिः विपाशा विपाट्। क्षुधा क्षुत् इत्यादयः॥ ११५५॥

कथा कुम्बा चर्चा स्पृहा तोला दोला पचा भिदा छिदा गुहा विदा चिपा जना पीड़ा सरा वसा रुजा घटा व्यथा त्वरा।

## ११५७। आतोऽन्त: श्रद्भे।

आत: ५।, अन्तर्-श्रत्-गे: ५।, ।

एभ्य: परादादन्तात् ङ: स्यात् स च स्त्रियाम्। अन्तर्द्धा श्रद्धा, संज्ञा प्रमा।

---

ष इत् यस्य स षित्। भिद आदिर्यस्य स भिदादि:। आत्वर् त्वरपर्यन्त:। स चासौ घटादिश्चेति आत्वर्घटादि:। ततो भीषिश्च चिन्तिश्चेत्यादि समाहारस्तस्मात्। ञिभील्वि भीत्यां णौ भीषादेशपचे भीषि:। चिति क स्मृतौ। पूजक पूजे। कथत् क वाक्यप्रबन्धे। कुविकि स्तुत्याम्। चर्चकोङ स्म:। स्पृहत्केप्सें। तुलकि उन्मितौ। दुलक्युत् चेपे। नवैते ञ्यन्ता:। एभ्यो णौषि: अन्यीत्यादिना प्राप्त-व्यम् अनं बाधित्वा अनेन ङप्रत्यये ञेर्लोपे स्त्रीत्वादापि भीषा इत्यादि। षितस्तु डुञौष पच पाके पचा। एवं चिनगष चिया। रुजलुष शुद्धौ रुजूषकि भूषे च इति इयो: रुजा। लभङ्ौङष: लभा। चमुङञिष: चमा इति। भिदादेस्तु। भिदिर भिदा। छिदिर छिदा। गुहञ गुहा। विदल मतौ विदा। चिपषञौ चिपा। एषु ङित्त्वात् न गुण:। जनीण्यङ जनौ हनगमेत्यच ङवर्जनात् न लोप:। पीड़क पीड़ा अत्र ञ्यन्तत्वादन प्राप्तौ ङ:। सृ गतौ सरा। ङे परे इयोरिति गु:। श्रौवसे निवासे। रुजोश्रौ रुजा अच ङित्वात् न गुण:। इत्यादिराकृतिगण: रुजो विसर्गे रुजा इत्यपि केचित्। आत्वर्घटादिस्तु। घट-षमङ चेष्टने। जूइषम्य ज्यानौ। चजि चजष मङ त्यागे गतौ। प्रथ षमङ ख्यातौ व्यथषमङ दु:खे। कद क्रद क्लदषमङ वैक्लव्यविकलत्वयो:। चद्यषङ चोदने स्खद्यङष विदारे क्रपषमङ क्रपायां स्यात्। क्लवषङ तु भये। दचषङ हिंसने। त्रपूषमिङ लज्जायाम्। प्रसषञ प्रसवे ततौ, ञित्वर्षमङ वेगे स्यादमी आत्वर्घटा-दय:। घटा व्यथा इत्यादय: ॥ ११५६ ॥

अन्तर्द्धानम् अन्तर्द्धा। एवं श्रद्धा श्रदित्यव्ययम्। संज्ञायतेऽनया संज्ञा नाम। प्रमीयतेऽनया प्रमाणमिति वा प्रमा। एषु डस्येचीत्याकारलोपे स्त्रीत्वादाप् ॥११५७॥

### ११५८ । ञी षि श्रन्थि ग्रन्थि वेत्ति वन्दासोऽनः ।

ञि—श्रास: ५।, श्रन: १।।

एभ्योऽनः स्यात् स च स्त्रियाम् । कारणा ईषणा श्रन्थना ग्रन्थना वेदना वन्दना आसना ।

### ११५९ । प्रश्नाख्याने णिः ।

प्रश्न—आख्याने ७, णि: १।।

प्रश्ने आख्याने च धोर्णिः स्यात् स च स्त्रियाम् । काङ्कारिमकार्षीः सर्वाङ्कारिमकार्षम् ।

### ११६० । नञोऽन्याक्रोशे स्त्री ।

नञः ५।, अनि ।१।, आक्रोशे ७, स्त्री ।१।।

नञः पराद्धोरनिः स्यात् आक्रोशे, स च स्त्रियाम् । अजीवनिस्तस्य भूयात् अप्रयाणिः ।

### ११६१ । ईषद्दुःसोः खल् भावे ढे ।

ईषत्-दुर्-सो: ५।, खल् ।१।, भावे ७, ढे ७।।

एभ्यः पराद्धोः खल् स्यात् भावे ढे च । ईषदाढ्यम्भवं भवता । दुराढ्यम्भवं भवता । ईषत्करः कटस्त्वया, दुष्करः सुकरः ।

---

ञिकृञ्‌ल: । कारणा । ईषुञ्छे ईषणा । श्रन्थ क्रिग दर्भे श्रन्थना । ग्रन्थ मोचे प्रतिहर्षे ग्रन्थना । विदज्ञतौ वेदना । वदिङ नुत्यभिवादयोः वन्दना । ञिआसङ उपवेशे आसना ॥ ११५८ ॥

कृञ दडुच णेर्णित्वात् वृद्धौ कारिः । केचित् तु प्रश्ने आख्याने च ण्वकं त्तिं श्रं क्यपञ्च कृत्वा काङ्कारिकां काङ्कतिं काङ्क्रियां काङ्कत्याम् अकार्षीः सर्वाङ्कारिकां सर्वाङ्कतिं सर्वाङ्क्रियां सर्वाङ्कत्याम् अकार्षम् इत्युदाहरन्ति ॥ ११५९ ॥

जीवक्ष प्राणे अनिः अजीवनिः । याल गतौ अप्रयाणिः । नीच इति णत्वम् । स्त्र्यधिकारेऽपि स्त्रीग्रहणं स्त्र्यधिकारनिवृत्त्यर्थम् ॥ ११६० ॥

एषामव्ययत्वात् खितकार्य्याभावेऽपि ईषत् दुःसोः परात् धातोः खलविधाना

## ११६२। आतोऽनोऽदरिद्रः।

आतः ५।, अनः १।, अदरिद्रः ५।।

दरिद्रावर्जात् आदन्तादीषद्दुःसोःपरात् अनः स्यात् भावे ढे च। ईषत्पानः दुष्पानः सुपानः। अदरिद्रः किम्? ईषद्दरिद्रम्

## ११६३। दृश शास युध धृष मृषो वा।

दृश—मृष: ५।, वा।१।।

ईषद्दुःसो परेभ्यः एभ्योऽनः स्यात् भावे ढे च वा। सुदर्शनः सुदर्शः, दुःशासनः दुःशासः, दुर्य्योधनः दुर्य्योधः, सुधर्षणः सुधर्षः, ईषन्मर्षणः ईषन्मर्षः।

## ११६४। तादर्थ्ये चतुम्।

तादर्थ्ये ७, चतुम्।१।।

धोस्तुम् स्यात् तादर्थ्ये। कृष्णं द्रष्टुं याति।

---

दीक्ष्यादिशब्दव्यवधानेऽपि स्यात् तेन ईषदाढ्योपपदात् भवतेर्भावे खलि गुणे खित्त्वा-दाढ्यस्य मनि ईषदाढ्यं भवम्। एवं दुराढ्यं भवम्। ईषत् क्रियतेऽसौ इति कर्म्मणि खलि ईषत्करः एवं दुःखेन क्रियतेऽसौ दुष्करः। सुखेन क्रियतेऽसौ सुकरः॥ ११६१॥

ईषत् पीयतेऽसौ इति कर्म्मणि अने ईषत्पानः। एवं दुष्पानः। अत्र दुर्वर्ज-नात् न णत्वम्। सुपानः। अदरिद्र किम्? ईषत् दरिद्रायते इति भावे खलि दरिद्र आलोपे ईषद्दरिद्रम्॥ ११६२॥

सुखेन दृश्यतेऽसौ इति कर्म्मणि अने सुदर्शनः खलि सुदर्शः। एवं सुखेन शिष्यतेऽसौ सुशासनः सुशासः। एवं दुःशासनः दुःशासः। युध्यौङ् युद्धे अन्त-र्भूतण्यर्थत्वात् सकर्म्मकत्वे दुःखेन युध्यतेऽसौ इति कर्म्मणि अने दुर्य्योधनः खलि दुर्य्योधः धृषा किं त्वसर्वे अमर्षे इह अभिभवः। सुखेन धृष्यतेऽसौ सुधर्षणः सुधर्षः। मृषुञ् क्षान्तौ। ईषत् मृष्यतेऽसौ ईषन्मर्षणः ईषन्मर्षः॥ ११६३॥

स धात्वर्थः स चासौ अर्थः प्रयोजनश्चेति तदर्थः तस्य भावस्तादर्थ्यं तस्मिन्।

## ११६५। क्ताच् वा निषेधेऽलं खलुना॥

क्ताच् ।१।, वा ।१।, निषेधे ७।, अलं ।१।, खलुना ३।।

निषेधार्थयोः अलं-खल्वोर्योगे धोः क्ताच् स्यात् वा भावे॥ अलंदत्त्वा अलं दानेन, खलु पीत्वा खलु पानेन।

## ११६६। पूर्वकाले।

पूर्वकाले ७।

पूर्वस्मिन् काले स्थिताद्धोः क्ताच् स्यात्। विष्णुं नत्वा स्तौति।

---

यस्य धातोरर्थः अन्यधात्वर्थस्य प्रयोजनं भवति तस्मात् धातोर्भावे भविष्यत्काले चतुम् स्यादित्यर्थः। चकारोऽव्ययार्थः दृश् शौ प्रेचे चतुम् औदित्त्वात् इमोऽभावे वर्द्रोऽकिदिति ऋकारस्य रेफे शक्राजेति षङि तस्य टत्वे द्रष्टुम् अत्र दृशधातोरर्थः या धात्वर्थस्य प्रयोजनं भवतीति दृशधातोश्चतुम्। अत्र क्रिययोरेककर्तृत्वे सत्येव चतुम् स्यात्। तेन विप्रमन्नं भोक्तुं निमन्त्रयते इति न स्यात् अन्नभोजनाय विप्रं निमन्त्रयते इत्येव स्यात्॥ ११६४॥

चकारोऽव्ययार्थः। शीव्रज इत्यादिसूत्रस्य वृत्तौ भावपदव्याख्यानात् इत्यादौ भावस्यैवानुवृत्तिः। तेन डुदाञलि दाने भावे क्ताचि दद्दोध इति दत्तादेशे दत्त्वा पचेऽनटि सह वारणेत्यादिना तृतीया दानेन। पा पाने भावे क्ताचि दामागे इति ङी पीत्वा पचे पानेन॥ ११६५॥

यदा कर्त्ता क्रियाद्वयं क्रियात्रयं करोति तदा परक्रियापेचया पूर्वस्मिन् काले वर्त्तमानात् धातोर्भावे क्ताच् स्यात् इत्यर्थः। तेन पक्त्वा भुङ्क्ते भुक्त्वा यात्वा याति। विष्णुं नत्वा स्तौतीति स्तवनक्रियायाः पूर्वकाले वर्त्तमानान्नमो ... रित्यस्मात् क्त्वाचि वनतनेति मलोपे नत्वा। पूर्वकाले किं नमति च स्तौति च इत्यादौ न स्यात्। अत्र क्रियाणामेककर्तृत्वे एव क्ताच् स्यात्। तेन गुरौ गते शिष्यो भुङ्क्ते इत्यादौ न स्यात्। किन्तु पुत्रं दृष्ट्वा सुखं भवति खलं दृष्ट्वा दुःखं भवतीत्यादौ स्थितस्य इत्यध्याहारादेककर्तृकत्वे क्ताच्। यद्यपि कांसपतनानन्तरमेव झनत्कारो भवति तथापि झनदिति कृत्वा कांसः पतति इत्यादौ झनत्कारस्य पूर्वकालविवचया क्ताच् स्यात्। एवं मुखं व्यादाय निद्रातीत्यादि॥ ११६६॥

## ११६७ । न कित् स्कन्दस्यन्दः ।

न ।१।, कित् ।१।, स्कन्द-स्यन्दः ५। ।

स्कन्त्वा स्यन्त्वा ॥

## ११६८ । सेमऽक्षुध कुष क्लिश गुध मृड मृद वद वस ग्रहः ।

सेम् ।१।, अक्षुध—ग्रहः ५। ।

धोः पर इम् सहितः क्त्वाच् कित् न स्यात्, न तु क्षुधादेः । शयित्वा । सेम् किम् ? श्रुत्वा । क्षुधादेस्तु क्षुधित्वा ।

## ११६९ । तृष मृष कृष वञ्च लुञ्चृतो वा ।

तृष—ऋतः ५।, वा ।१। ।

एभ्यः सेम् क्त्वाच् कित् न स्यात् वा । तर्षित्वा मर्षित्वा कर्षित्वा वञ्चित्वा लुञ्चित्वा अर्त्तित्वा । पक्षे तृषित्वा इत्यादयः ।

---

आभ्यां परः क्त्वाच् कित् न स्यात् । स्कन्दिरौ गतिशोषणयोः । क्त्वाचः कित्त्वाभावात् हसुङ्क इत्यनेन नलोपाभावे एकवर्गीयवर्णत्रयमध्यवर्त्तित्वात् दलोपे स्कन्त्वा । स्यन्दङ्क्वल्ल स्रुतौ क्त्वाचि ऊदित्त्वात् इमोऽभावपक्षे स्यन्त्वा । अत्र नञा निर्दिष्टमनित्यमिति न्यायात् क्त्वाच् स्थानजातस्य यपः कित्त्वे प्रस्कद्य प्रस्यद्य इत्यत्र न लोपः स्यात् ॥ ११६७ ॥

सह इमा वर्त्तते योऽसौ स सेम् । शीङ्क्लञि क्त्वाच् वसोऽरस्येति इमि अनेन कित्त्वनिषेधे गुणे शयित्वा । एवम् ऋचश नुत्याम् अर्चित्वा इत्यादि । सेम् किम् ? जित्वा श्रुत्वा कृत्वा । क्षुधलृषो क्त्वाचि क्षुधवसेति इमि क्षुधित्वा । कुषग निष्कर्षे । कुषित्वा । क्लिश्‌ङुञ चोपतापे । क्लिश्‌गतु विबाधे एतयोः इम् पक्षे क्लिशित्वा । गुध्य वेष्टे गुधग रुषि गुधङ क्रीडे इति त्रयाणां गुधित्वा । मृड्गशमीटे मृडित्वा मृदग क्षुदि मृदित्वा एषु कित्त्वात् न गुणः । वदै वाचि ग्रहस्वपाद्योरिति जौ उदित्वा वसैऔ निवासे क्षुधवसेति इमि ग्रहस्वपाद्योरिति जौ शासवसेति षत्वे उषित्वा । गग्रहञ च ग्रहस्वपाद्योरिति जौ ग्रहेरिमीर्घ इति दीर्घे गृहीत्वा । क्षुध

## ११७० । थ-फात् नुङः ।

थ-फात् ५।; नुङः ५।।

नकारोङस्थान्तात् फान्ताच्च सेम् क्त्वाच् कित् न स्यात् वा। ग्रन्थित्वा ग्रथित्वा ग्रन्थित्वा ग्रथित्वा गुम्फित्वा गुफित्वा। नुङः किम्? कोथित्वा रेफित्वा।

## ११७१ । नश्-जोऽनिमः ।

नश्-जः ५।, अनिमः ५।।

नशो जान्ताच्च नुङोऽनिमः परः क्त्वाच् कित् न स्यात् वा। नंष्ट्वा नंष्ट्वा, भक्त्वा भंक्त्वा। अनिमः किम्? अञ्जित्वा।

[८१८] व्युङोऽवोहसादेरिति द्योतित्वा द्युतित्वा, लेखित्वा लिखित्वा। रुदादेस्तु रुदित्वा विदित्वा मुषित्वा। अवः किम्? देवित्वा। हसादेः किम्?, एषित्वा ओषित्वा।

---

इर्षंञि तृष तृषि। क्त्वाचः कित्वाभावे गुणे तर्षित्वा कित् पक्षे तृषित्वा। एवं मृषु सेचने मृष्यङु मृष्यञ चान्तौ एषां मर्षित्वा मृषित्वा। कृशिर्ष तु कार्श्ये कर्शित्वा कृशित्वा। वनचु गत्यां वञ्चित्वा कित् पक्षे वचित्वा। एवं लुन् चापनयने लुञ्चित्वा लुचित्वा। ऋत स्पर्द्धनैश्वर्ययोः अर्त्तित्वा ऋतित्वा ॥ ११६९ ॥

ग्रन्थग मोचे ग्रन्थित्वा ग्रथित्वा। गुन्फश ग्रन्थे गुम्फित्वा गुफित्वा। नकारोङः किम्? कुथ्यतु पूतित्वे कोथित्वा। रिफशर्फे रेफित्वा ॥ ११७० ॥

नश च ज चेति तस्मात्। नश्लृ नाशे ऊदित्वात् वेमूदित्यनेन इमोऽभावपक्षे नुम् रधेति नुमि कित् पक्षे हसुङ इति नलोपे शक्नजेति षडि नष्ट्वा भन्ज्ञोधौ मोटने औदित्वात् इमोऽभावे न लोपे चङ्डिति जस्य गकारे झप्भसोरिति गस्य ककारे भक्त्वा। पक्षे नस्यानुस्वारे अपेञमनोरिति तस्य ङकारे भङ्क्त्वा। अनिमः किम्? अञ्जधञि इम् पक्षे सेमक्त्वधेति कित्व निषेधे नस्यानुस्वारे तस्य ञकारे अञ्जित्वा। वुङोऽवो हसादेरित्यस्योदाहरणमाह द्युत्लङ द्युत्यां द्युतित्वा द्योतित्वा लिखश लेखने लिखित्वा लेखित्वा। रुदादेस्तु रुदित्वा विदित्वा मषित्वा। अवः

## ११७२ । पू-क्लिशुदित इम् ।

पू-क्लिश-उदितः ५।, इम् ।१।।

एभ्यः क्त्वाच् इम् स्यात् वा । पविला पूत्वा, क्लिशित्वा क्लिष्ट्वा, शमित्वा शान्त्वा ।

## ११७३ । क्रमोर्घो वा ।

क्रमः ६।, घं: १।, वा ।१।।

क्रमित्वा क्रान्त्वा क्रन्त्वा ।

## ११७४ । जॄ-व्रश्चो न जिः ।

जॄ-व्रश्चः ६।, न ।१।, जिः १।।

आभ्यां क्त्वाच् इम् स्यात् न तु व्रश्चेर्जिः । जरित्वा व्रश्चित्वा ।

---

किम् ? दिव्यु जिगीषादौ उदित्वेन क्त्वाच् वेट्त्वात् इम् पचे सेमचुधकुबेत्यादिना । नित्यकित्त्वाभावे गुणे देविला पचे द्युत्वा इति बोध्यम् । इसादिः किम् ? एषित्वा ओषित्वा । अनयोरपि वेमत्वात् इम् पचे कित्त्वाभावो नित्यः ॥ ११७१ ॥

वृदुश्रीत्यनेन कितामिमः निषेधात् पू इत्यस्याप्राप्तौ विकल्पार्थम् ग्रहणम् । क्लिश्युष्ञ चोपतापे अस्य स्वमते उदित्त्वेऽपि पुनर्ग्रहणम् अन्येषां मते उदित्त्वाभावात् । पूस्वरूपात् क्त्वाचोऽनेन इमि सेमचुधक्रुषेत्यादिना कित्त्वनिषेधात् गुणे पविला पचे पूत्वा । क्लिश्युञ क्त्वाच इमि सेमचुधेत्यत्र क्लिशवर्जनात् गुणाभावे क्लिशित्वा पचे क्लिष्ट्वा । शमुभिर्ष शमे उदित्त्वादनेन इमि शमित्वा पचे जसुङ् ऋस्वणाविति दीर्घे शान्त्वा ॥ ११७२ ॥

क्रमो र्घः स्यात् क्त्वाचि । क्रमु गतौ क्त्वाच् वेट्त्वात् इमोऽभावपचेऽनेन दीर्घे क्रान्त्वा पचे क्रन्त्वा । इम् पचे क्रमित्वा इति बोध्यम् ॥ ११७३ ॥

विभाषाद्वयमध्यवर्त्तित्वादस्य नित्यत्वम् । जॄस्वरूपात् वृदुश्रीत्यनेन कितामिम् निषेधेऽपि अनेन इमि सेमचुधेत्यादिना कित्त्वनिषेधात् गुणे जरित्वा । पचे वृतो

## ११७५ । ह्लाको हिः ।

ह्लाकः ६।, हिः १।।

हित्वा ।

## ११७६ । व्यादनञः क्त्वो यप् से ।

व्यात् ५।, अनञः ५।, क्त्वः ६।, यप् ।१।, से ७। ।

नञ्वर्जात् व्यात् परात् धोः क्त्वो यप् स्यात् से सति । प्रकर्षेण कृत्वा प्रकृत्य, प्रवत्य प्रतत्य प्रहत्य, उदज्य, प्रदाय प्रमाय प्रगाय प्रह्लाय प्रपाय प्रसाय प्रस्थाय । [ ७४३ ] दीङ्‌ष्ठ्यामिति यपि ङा । प्रदाय [ ७४५ ] मिम्योरिति ङा प्रमाय प्रलाय प्रलीय ।

---

न्यकारे इति क्रसान्तस्य ग्रहणमित्येके । त्रश्चू छेदे ऊदित्वेन वेमत्वेऽपि अनेन नित्यं मि व्रश्चित्वा । सेम् क्त्वाचः किन्वनिषेधादेव जेरप्राप्तौ अत्र जेर्निषेधो ज्ञापयति कस्यचिद्विधेर्निषेधेऽपि पुनः प्रसक्तिः स्यादिति । तेन ह्वचतेरिति इम् निषेधेऽपि उणादेः तेः इम् स्यात् । यथा भणितिः सङ्कुचितिः निकुचितिः आलोचितिः पठितिः स्पृहीतिः क्षिहितिः उदितिः मुदितिः दीधितिरित्यादि ॥ ११७४ ॥

ह्लाको हिः स्यात् क्त्वाचि । हित्वा । ह्लाकः किम् ? ओह्लाङ्लि गतौ ह्लात्वा ॥११७५॥

नास्ति नञ् यत्र सोऽनञ् तस्मात् । कृञ्दड् च प्रकर्षेण कृत्वा इति व्यस्य ग्यनु-कारिति समासे अनेन क्त्वाचो यपि तस्य स्थानिवत्त्वेन कित्वात् गुणाभावे स्वस्य तनि प्रकृत्य । वनुम व्याप्तौ प्रवत्य । तनदुञ विस्तृतौ प्रतत्य । हनलौ प्रहत्य । एषु वनतनेति न लोपे स्वस्य तन् । अञ्जूधजि हसुङ्क इति न लोपे उदज्य । दा इति स्वरूपस्य प्रदाय । मा इति स्वरूपस्य प्रमाय । गै प्रगाय । ह्लाक प्रह्लाय । पा पाने प्रपाय । षोंय नाशे प्रसाय । स्था प्रस्थाय । एषु दामागेह्लागित्यत्र यप्वर्जनात् न ङौ । ओदीङ्य चये दीङ्‌ष्ठ्यामिति ङादेशे प्रदाय । डुमिञन चेपे मीङ्‌ष्तु मीञम वधे एषां मिम्योरिति ङादेशे प्रमाय । ली इत्यस्य लियस्तु वेत्यनेन ङादेश विकल्पे प्रलाय प्रलीय । अनञः किम् ? अकृत्वा न कृत्वा । से किम् ?

## ११७७ । म्लोपो वा अनिमः ।

म् लोपः १।, वा ।१।, अनिमः ६। ।

अनिमो मस्य लोपः वा स्यात् यपि । प्रणत्य प्रणम्य । अनिमः किम् ? प्रशम्य ।

## ११७८ । घोर्जेरयः ।

घोः ५।, जेः ६।, अयः १। ।

घुपूर्वस्य जेरयः स्यात् यपि । विगणय्य । घोः किम् ? सम्प्रधार्य्य ।

## ११७९ । वाापः ।

वा ।१।, आपः ५। ।

आपः परस्य जेरयः स्यात् वा यपि । प्रापय्य प्राप्य ।

## ११८० । वा-मेच्योर्मिच्यौ ।

वा ।१।, मे-च्योः ६॥, मिच्यौ: १॥ ।

मेङो मिः चेः ची स्यात् वा यपि । अपमित्य अपमाय, प्रचीय प्रचित्य ।

---

सपदि कृत्वा इति । कदाचिदनव्ययपूर्वादपि तेन स्वधनं त्यज्य गच्छति । सम्या-वधूं गृह्य करेण गाढ़मित्यादि जौमराः ॥ ११७६ ॥

नमी शब्दनत्योः नलोपे स्वस्य तनि प्रणत्य पक्षे प्रणम्य । एवम् औगम आगत्य आगम्य । अनिमः किम् ? विक्रम्य आचम्य । निर्जित्य आहृत्य विधृत्य इत्यादौ आगमादेश्योरागमस्य बलवत्त्वादौ स्वस्य तनागमे घौंऽजघ्ये इति न स्यात् ॥११७७॥

लघोरव्यवहितपरस्य जेरसम्भवात् हसव्यवधाने इत्यर्थः । गणाक संख्याने । जौ हसाल्लोपे इत्यकारलोपे गणिभागात् क्वाची यपि अनेन जेरयि विगणय्य एवं विघटय्य इत्यादि । घोः किम् ? संपूर्वात् धृक धृत्यां जौ धारिभागात् क्वाचो यपि गुर्वक्षरपूर्वत्वात् जेरयाभावे जेर्लोपे सम्प्रधार्य्य । एवं प्रपाठ्य प्रभाव्य इत्यादि ॥ ११७८ ॥

## ११८१ । न वे-ज्या-व्यो जिः ।

न ।१।, वे-ज्या—व्यः ६।, जिः १। ।

एषां जिर्न: स्यात् यपि । प्रवाय प्रज्याय प्रव्याय ।

## ११८२ । संपरि-व्यो वा ।

सम्-परि-व्यः ६।, वा ।१। ।

आभ्यां व्येञोजिर्वा स्यात् यपि, संवीय संव्याय, परिवीय परिव्याय ।

## ११८३ । णम् वाभीक्ष्ण्ये पूर्वकाले ।

णम् ।१।, वा ।१।, आभीक्ष्ण्ये ७।, पूर्वकाले ७। ।

धोः पूर्वकाले णम् वा स्यात् पौनःपुन्ये । स्मृत्वा स्मृत्वा नमसि, स्मारं स्मारं नमसि ।

क्तो ये यत्र विहितास्तत्र नूनं भवन्ति ते ।
क्त्वोः कभाव इत्युक्तेरन्यत्रापि प्रयोगतः ॥

तथाच ।

कृत्तद्धितसमासानामभिधानं नियामकम् ।
लक्षणं त्वनभिज्ञानां तदभिज्ञानसूचकम् ॥

---

मेङ प्रतिदाने क्त्वाचो यपि अनेन मि आदेशे स्वस्य तनि अपमित्य । पक्षे एचोऽग्नित्या अपमाय । चिस्वरूपात् क्त्वाचो यपि दीर्घान्तादेशे प्रचीय पक्षे स्वस्य तनि प्रचित्य । पुनर्वा ग्रहणं परतो वाधिकारनिवृत्त्यर्थम् ॥ ११८० ॥

ऐणवे स्युतौ ज्यागि जरायां व्येञै वृतौ एषां ग्रहस्वपाद्योरिति प्राप्तौ जिर्न स्यात् यपि ॥ ११८१ ॥

सम्परिपूर्वस्य व्येञैवृतावित्यस्य जिर्वा स्यात् यपि । संवीय परिवीय । उभयत्र जौ कृते जीर्घोऽन्त्य इति दीर्घः । सम्परिपूर्वस्य किम् ? अव्याय प्रतिव्याय ॥ ११८२ ॥

अभीक्ष्णं मुहुरर्थमव्ययं तस्य भावः आभीक्ष्ण्यम् । अत्रापि क्रिययोरेककर्तृकत्वे

चक्रव्यात् द्वित्वम्। चित्त्वादव्ययम्। पचे स्मृत्वा स्मृत्वा। अत्र वाशब्दस्य व्यवस्थावाचित्वात् क्वचित् पौनःपुन्याभावेऽपि चणम् स्यात्। तदेवाह विस्तृणोमि। अग्रे प्रथमपूर्वेष्वी भीयणम् वा। अग्रे भोज व्रजति अग्रे भुंक्ता व्रजति। एवं प्रथमं पूर्वम्। कर्मणः कृञश्चणमः। खणमाक्रोशे। चौरं कारमाक्रोशति। खित्त्वात् मन्। णित्त्वात् वृद्धिः। चौरं कृत्वा आक्रोशतीत्यर्थः। आक्रोशे किम्? साधु कृत्वा भौति। स्वार्थात् कृञः। स्वादुङ्कारं भुङ्क्ते। सुरसङ्कारं भुङ्क्ते। कथङ्कारं भुङ्क्ते। दीर्घात् नेष्यते। स्वादूकृत्य अनीकारी दीर्घः। स्वाद्वीं कृत्वा यवागूं भुङ्क्ते। कथमित्थमेवमन्यथाभ्यः कृञश्चणम्। कथङ्कारं भुङ्क्ते। इत्थङ्कारम्। एवङ्कारम्। अन्यथाकारम्। यथातथाभ्यामचमोत्तरे। यथाकारं तथाकारम्। अहम् भोक्ष्ये तवानेन किम्। अचमोत्तरे किम्? यथा कृत्वा अहं भोक्ष्ये तथा कृत्वा अहं द्रक्ष्यामि। दृशविद्भ्यां साकल्ये। कन्यादर्शं वृणोति यां यां कन्यां पश्यति तां तां सर्वां वृणोतीत्यर्थः। विप्रवेदं भोजयति यं यं विप्रं वेत्ति विन्दति वा तं तं भोजयतीत्यर्थः। साकल्ये किम्? किञ्चिद्विप्रं दृष्ट्वा भोजयति। यावती जीवविन्दात्। यावज्जीवमधीते यावज्जीवति तावदधीते इत्यर्थः। यावत् वेदं भुङ्क्ते यावन्तं विन्दति तावन्तं भुङ्क्ते इत्यर्थः। चर्मोदराभ्यां पूरेः। चर्मपूरं ददाति। उदरपूरं भुङ्क्ते उदरं पूरयित्वा भुङ्क्ते इत्यर्थः। वर्षप्रमाणे ऊकारलोपश्च वा। गोष्पदप्रं गोष्पदपूरं वृष्टो देवः गोष्पदं पूरयित्वा ववर्षेत्यर्थः। वस्त्रार्थात् क्नोपेः। वस्त्रार्थात् परात् ज्ञन्तक्नूयधातोश्चणम् स्यात् वर्षप्रमाणे। वस्त्रक्नोपं चेलक्नोपं वृष्टो देवः वस्त्रम् आर्द्रं कृत्वा वृष्ट इत्यर्थः। निमूलसमूलाभ्यां गतार्थे कषः। निमूलकाषं समूलकाषं कषति समूलं कषतीत्यर्थः। यत्र गतार्थात् चणम् स्यात् तत्र तद्धातुरनुप्रयुज्यते। गतार्थादिति किम्? चेलक्नोपं वृष्टो देवः। समूलात् गतार्थहन्तेः। समूलघातं हन्ति समूलं हन्तीत्यर्थः। शुष्कचूर्णरूक्षाङ्गतार्थपिषः। शुष्कपेषं पिनष्टि शुष्कं पिनष्टीत्यर्थः। एवं चूर्णपेषम्। रूक्षपेषम्। जीवाङ्गतार्थग्रहः। जीवग्राहं गृह्णाति जीवं गृह्णातीत्यर्थः। अकृताङ्गतार्थे कृञः अकृतकारं करोति अकृतं करोतीत्यर्थः। करणाङ्गतार्थहन्तेः। पादघातं भूमिं हन्ति पादेन भूमिं हन्तीत्यर्थः। हस्तार्थकरणाङ्गतार्थग्रहवर्त्तिवृतः। हस्तग्राहं गृह्णाति हस्तेन गृह्णातीत्यर्थः। हस्तवर्त्तं वर्त्तयति हस्तेन वर्त्तयतीत्यर्थः। करवर्त्तं वर्त्तते करेण वर्त्तते इत्यर्थः। आत्मीयबन्धुवित्तवाचकात् करणाङ्गतार्थपुषः। स्वपोषं पुष्णाति स्वेन पुष्णातीत्यर्थः। एवं

आत्मपोषं आत्मीयपोषं ज्ञातिपोषं बन्धुपोषं धनपोषम्। स्नेहनात् करणाङ्गतार्थे-पिष:। स्निह्यतेऽनेनेति स्नेहनं जलादि। उदकपेषं पिनष्टि उदकेन पिनष्टीत्यर्थ:। एवं तैलपेषं घृतपेषम्। आधाराङ्गतार्थबन्ध:। चक्रबन्धं बद्ध: चक्रे बद्ध इत्यर्थ:। मुष्टिबन्धं बद्ध: मुष्टौ बद्ध इत्यर्थ:। संज्ञायाञ्च। क्रौञ्चबन्धनं बद्ध:। एवं मयूरिकाबन्धं बद्ध इत्यादि। बन्धनविशेषाणामियं संज्ञा। कर्त्तुर्जीवपुरुषाङ्गतार्थनशवह: क्रमात्। जीवनाशं नष्ट: जीवो नष्ट इत्यर्थ:। पुरुषवाहं वहति पुरुषो भूत्वा वहतीत्यर्थ:। विद्युत्प्रणाशम्। अयं निपात्यते। विद्युत्प्रणाशं नश्यति विद्युदिव नश्यतीत्यर्थ:। ऊर्द्ध्वाङ्गतार्थशुषिपूरे:। ऊर्द्ध्वात् कर्त्तु: पराभ्यां गतार्थशुषिपूरिभ्यां चणम् स्यात्। ऊर्द्ध्वशोषं शुष्क:। ऊर्द्ध्वपूरं पूर्ण:। तृतीयान्ताद्युपपदेन चणमन्तस्य समासो वा वक्तव्य:। तृतीयान्तपदादुपदंशे। तृतीयान्तपदादुपदंशश्चणम् स्यात्। तृतीयान्तेन समासश्च वा। मूलकेनोपदंशं भुङ्क्ते। हिंसार्थाच्चैककर्म्मकात्। तृतीयान्तादिपदाद्धिंसार्थधातोश्चानुप्रयोगेण सहैककर्म्मकात् चणम् स्यात्। तेन समासश्च वा। दण्डेनोपघातं दण्डोपघातं गाश्चालयति। केशेषु केशैर्वा ग्राह्यं युध्यन्ते केशग्राहं युध्यन्ते। पार्श्वयो: पार्श्वाभ्यां वा उपपीड़ं शेते। मुष्टिपीड़ं दधाने इति भट्टि:। एवं पाण्युपकर्षं भक्षयति पाणिना उपकृष्य जनो भक्षयतीत्यर्थ:। अपादानाद्धातोश्चणम्। त्वरायां समासश्च वा। शय्याया उत्थानं शय्योत्थायं धावति। द्वितीयान्ताद्धातोश्चणम् समासश्च वा। लोष्टं ग्राहं लोष्टग्राहं युध्यन्ते। स्वाङ्गाच्चाध्रुवाद्धातोश्चणम् समासश्च वा। यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तत् अध्रुवम्। भ्रुवौ विक्षेपं भ्रूविक्षेपं वक्ति। अध्रुवादिति किम्? शिर उत्क्षिप्य कथयति। परिपीड्यमानस्वाङ्गाद्धातोश्चणम् समासश्च वा। उरसि परिपेषम् उर:परिपेषं युध्यन्ते क्षतृक्षमुर: पीड़यित्वा युध्यन्ते इत्यर्थ:। उरो विदारं प्रतिचस्करे नखैरिति माघ:। उपपदवीप्सायां धोश्चणम् स्यात् समासश्च। शिलायां शिलायामुपविश्य शिलोपवेशं लतां लतामनुपात्य लतानुपातम्। नदीं नदीमवस्कन्द्य नद्यवस्कन्दमिति। नाम्न आदिश्यग्रह: समासश्च वा। नामान्यादेशं नामादेशं ददाति एवं नामानिग्राहं नामग्रहं आह्वयति। तसन्तस्वाङ्गात् धोश्चणम्। क्त्वाचौ समासश्च वा। मुखत:कारं मुखत:कृत्य मुखत:कृत्वा आस्ते। तसन्तत्वेनाव्ययत्वात् क्त्वाचो यप्। तसन्तस्वाङ्गात्तु च्वीसंश्च भुवश्चणम् क्त्वाचौ समासश्च वा। मुखतो भावं मुखतो भूय मुखतो भूत्वा आस्ते। एवं तूष्णीम्भावं तूष्णीभूय तूष्णीम्भूत्वा। एतच्च प्रयोगानुसारात् धातुविशेषेभ्य: अर्थविशेषेषु प्रत्ययविशेषाद्

## ११८४ । बहुलं ब्रह्मणि ।

बहुलं १।, ब्रह्मणि ७।।

यत् इदं लौकिकप्रयोगव्युत्पत्तये लक्षणमुक्तं तत् वैदिकप्रयोगव्युत्पत्तौ बहुलं ज्ञेयम्। क्वचित् विहितं न स्यात्। [१] क्वचित् निषिद्धं स्यात् [२]। क्वचित् वा स्यात्। क्वचित् ततोऽन्यत्रापि इत्यर्थः। यथा पूर्वेभिः [१] ब्राह्मणास् [२] इत्यादौ वेदसिद्धेः ।

ब्रह्मशब्दोऽत्र मङ्गलार्थः ।

### इति इण्वादि-पादः ।

इति कृदन्ताध्यायः ।

### समाप्तम् ।

---

कृत्ताऽन्येऽपि साधुशब्दा व्युत्पाद्याः। यथा उणिकृते करोतीति कारुः। वातीति वायुः। भातीति भवान्। बिभेत्यस्मादिति भी कृते भीमभीष्मौ निपात्यौ। एवं धातुमात्राद्भावे इः। यथा भवनं भविः त्यजनं त्यजिः नर्त्तनं नृतिः। अत्र किम्? नोदनं नुदिः दर्शनं दृशिरित्यादि। धातोः स्वरूपकथने तिप्। यथा भवतिः अत्तिः दीव्यतिः। एवं स्वरूपकथने इर्ब्रुवादेर्न च गुणः। भविः ग्रहिः रन्जिः। ब्रुवादेस्तु ब्रुविः युजिः मुहिः सिचिः द्रुहिः दृशिरित्यादि। अतएव नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्। यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च हि दृष्टमिति प्राञ्चः।

कृतो ये यत्रेति—

ये कृतः यत्र येष्वर्थेषु विहितास्ते तत्र तेषु नूनं निश्चितं भवन्ति। प्रयोगतः महाकविप्रयोगानुसारेण अन्यत्रापि स्युः। तत्र हेतुमाह। कृद्भीः कभाव इति वचनात्। उदाहरणं तत्रैव द्रष्टव्यम्। न केवलमहमेवं ब्रवीमि प्राञ्चोऽप्येवमाहुः इत्यत आह कृत्तद्धितसमासानामिति ॥ ११८३ ॥

बहुलमिति। बहवः प्रकाराः सन्त्यस्येति बहुलं चूडादित्वात् लः। अथवा बहून् अर्थान् लाति गृह्णाति बहुलम् ॥ ११८४ ॥

मुग्धबोध-पठन प्रयोजनम् ।

गीर्वाणवाणीवदनं मुकुन्द-
सङ्कीर्त्तनञ्चेत्युभयं हि लोके ।
सुदुर्लभं तच्च न मुग्धबोधा-
न्न लभ्यतेऽतः पठनीयमेतत् ॥

---

ग्रन्थकृत्-परिचयः ।

विद्वद्धनेश्वरच्छात्रो भिषक्केशवनन्दनः ।
वोपदेवश्चकारेदं विप्रो वेदपदास्पदम् ।

---

वोपदेव-प्रशंसा ।

यौर्वाचस्पतिनेव, पन्नगपुरी शेषाहिनेवाभवत्
येनैकेन विदुष्मती वसुमती मुख्येन सद्भावताम् ।
सोऽयं व्याकरणार्णवैकतरणि-श्चातुर्य्यचिन्तामणि-
र्जीयात् कोविदगर्वपर्वतपविः श्रीवोपदेवः कविः ॥

---

ग्रन्थोत्कर्षं ख्यापयन्नाह गीर्वाणेत्यादि। गीर्वाणवाणीवदनं संस्कृतकथनं मुकुन्दसंकीर्त्तनञ्च इत्युभयमेव लोके सुदुर्लभं भवति। तच्च उभयं न मुग्धबोधात् मुग्धबोधभिन्नग्रन्थात् न लभ्यते अतो हेतोः एतत् पठनीयम्। नानादेशीय-शिष्यपरम्परया नामोत्कीर्त्तनयशोवर्द्धनार्थं गुरोः पितुरात्मनश्च नाम निर्दिशति। वोपदेवः विद्वद्धनेश्वरेत्यादि। उः शिवः अः विष्णुः उश्च अश्च वौ वयोरुपसमीपे दीव्यतीति इदानीं तत् शिष्यस्तत्कीर्त्तिं वर्द्धयन् श्लोकद्वयमाह यौर्वाचस्पतिनेत्यादि ॥

दुर्गादासो व्यरचयदिमां मुग्धबोधस्य टीकां,
नानाविद्वन्मतविलसितामाशुबोधां सुबोधाम् ।
आलोकन्तामपिशुनबुधाः सूयमानाः स्वभावात्
दोषं त्यक्त्वा लवमपि गुणं भूरिवद्भावयन्तु ॥

इति श्रीदुर्गादासविद्यावागीशविरचितायां
मुग्धबोधस्य टीकायां कृदन्ताध्यायः ।

---

सम्पूर्णोऽयं ग्रन्थः ।

# सूचीपत्राणि ।

## सूत्रसूची ।

## स्त्रीत्य-सूची ।



## तद्धित-सूची ।

# आदेश-सूची ।